## शुभाशंसा

सर्वतन्त्रस्वतन्त्र-पद्मभूषण-महामहिमोपाध्याय-
पण्डितराजश्रीराजेश्वरशास्त्रिमहाभागानां—

॥ श्रीगुरुः शरणम् ॥

सांख्ययोगशब्दानां व्याख्यातृप्रणीतार्थानुसारेण कोष-रचना अपेक्षितैव। विशेषतः नव्यन्यायशब्दानुसारेण तादृशी रचना अत्यन्तमपेक्षिता। पण्डितप्रवरश्रीकेदारनाथत्रिपाठि-महोदयैरुपक्रान्तमिदं कार्यं सम्यग् उत्तरोत्तरमभिवर्धताम-मित्याशास्ते—

श्रीराजेश्वरशास्त्री द्राविडः

दिनाङ्कः—२२।११।१९७४

# सांख्ययोगकोशः



प्रणेता—
आचार्यकेदारनाथत्रिपाठी
( दर्शनविभागाध्यक्षः )
काशीहिन्दूविश्वविद्यालयः
वाराणसी

१००० प्रति ] प्रथम संस्करणम् [ १९७४

# किञ्चिन्निवेदनम्

मान्याः !

अस्माकं व्यवहारक्षेत्रे कोशानां कियदुपयोगित्वं विद्यत इति नास्ति तिरोहितं कस्यापि। यथा सञ्चिता द्रव्यकोशाः साक्षादेव पणनव्यवहारे सुखमुपयुज्यन्ते तथैव शब्दकोशा अपि यदेच्छं साक्षादेव व्यवहार उपयुज्यन्त इति। प्रकारान्तरेणैतदपि वक्तुं शक्यते यदशिक्षितस्य कृते व्यवहार एवास्ति भाषाज्ञानाद्युपायः। शिक्षमाणानां प्रौढानां कृते कोशो व्याकरणञ्चोभे अपि प्रधानभावेनोपयुज्येते यदा च सुशिक्षितानां कोश एव मुख्योपायो भिन्नभाषाज्ञानादौ। प्रकृते च ये छात्रावस्थायां वर्तमानाः साङ्ख्यशास्त्रं योगशास्त्रञ्चाधीयानाः सन्ति ते निजाध्ययनक्रम एव साङ्ख्ययोगशास्त्रीयशब्दानामभिप्रायं ग्रन्थतो गुरुतश्च ज्ञातुं प्रभवन्ति। किन्तु ये सम्पादितशास्त्रान्तराध्ययनाः अध्यापनादिकार्यान्तरव्यापृतास्ते एवंविधकोशसाहाय्येन साङ्ख्ययोगशास्त्रसिद्धान्ताननायासमगवन्तुं शक्ष्यन्तीति।

विश्वमेदिन्यादिकोशाः प्राचीनाः एकैकशब्दार्थसम्बन्धज्ञानार्थमेव विरचितास्तदानीम्। तेऽपि च सामान्यव्यवहारविषयीभूतानेव शब्दान् समाश्रयन्ते न तत्तच्छास्त्रीयपारिभाषिकानपि। तेष्वपि अमरत्रिकाण्डी तु सर्वेषां गीर्वाणवाणीसमुपासकानामुत्तमर्णा। अतएव "अष्टाध्यायी जगन्माता अमरकोशो जगत्पिता" इति रघुलंघुरमरो व्युत्पत्तिज्ञाने मातेवोपयुज्यते" इति च प्रसिद्धिरस्ति। यथा चैते शब्दार्थकोशास्तथा जगत्प्रपञ्चज्ञानार्थं ज्ञानकोशास्तत्तच्छास्त्रीयविषयज्ञानार्थंञ्च तत्तच्छास्त्रकोशाश्चातीवोपकारकाः सन्ति।

एवमेकशास्त्राभ्यासं सम्पादयतः कृते इतरशास्त्रविषयककोशा यथा सहायका भवन्ति तथैव स्वशास्त्रमभ्यसतः कृतेऽपि स्वशास्त्रीयकोशस्यापि भूयानुपकारोऽस्ति। यतो ह्येकैकस्मिन् शास्त्रेऽनेके ग्रन्थाः सन्ति, न चैकेन ते सर्वेऽभ्यसितुं शक्यन्ते। अतोऽभ्यसनीयशास्त्रसम्बन्धिकोश-लाभश्चेत् तदा श्रमं कालयापनं च विनैवेष्टविषयांशज्ञानं सहसैव भवितु-मर्हति। तेनैव कारणेन सांख्ययोगशास्त्रयोः कोशग्रन्थाभावमालक्ष्य तत्पूर्तिकामनया मम हृदि साङ्ख्ययोगकोशनिर्माणबुद्धिरुत्पन्ना। यतो बहुपूर्वं न्यायशास्त्रे श्रीभीमाचार्यझलकीकरकृतो न्यायकोशः, पूर्व-मीमांसाशास्त्रे केवलानन्दसरस्वतीकृतो मीमांसाकोशश्चेदानीमुपलब्धौ स्तः। अन्येष्वपि वेदान्तव्याकरणायुर्वेदादिशास्त्रेषु कोशग्रन्थाः सन्ति रचिता रच्यन्ते चेदानीमपि। वैदिकोशास्तु अनेके सन्ति दैशिक-वैदेशिकपण्डितैर्निर्मिताः। योगवेदान्तकोशनामा एको योगमिश्रितः कोशः श्रीशिवानन्दविरचितो वर्तते समुलभ्यस्तथापि स आङ्गलभाषायां विद्यतेऽपर्याप्तश्च वर्तते। तथापि सांख्ययोगशास्त्रयोः सुखप्रवेशसाधनभूतोः कोशात्मको निबन्धो नाद्यावधि केनापि विदुषा विहित इति। अहमेतत्कोश-निर्माणाय प्रवृत्तः।

यत्र तत्रागताः साङ्ख्ययोगशब्दाः प्रायः सर्वं एवात्र कोशे विभिन्न-ग्रन्थाधारेण सन्निवेशिताः, तेषामभिप्रायश्च विभिन्नाचार्यानुसारं वर्णितः। यत्र विशेषोद्धरणं नापेक्षितं तत्र कमपि सन्दर्भमनुल्लिख्यैव स शब्दो विन्यस्तः। यद्यत्र किमपि न्यूनत्वं स्खलनं वा भवेत् तन्मर्षणीयं विद्वद्भि-र्मयापि च संशोधयिष्यते संस्कारणान्तर इति।

यैर्विपश्चिद्भिः स्वबहुमूल्यसम्मतिप्रदानेनाहमनुगृहीतस्तेषामहं भृशं कृतज्ञोऽस्मीति निवेदयति—

प्रणेता

विद्वानों द्वारा समर्थित "सांख्ययोगकोशः" नामक अभिनव ग्रन्थ, जिसका प्रणयन प्राच्यविद्याधर्मविज्ञानसंकायके दर्शन-विभागाध्यक्ष श्रीकेदारनाथत्रिपाठीने किया है, दर्शनके जिज्ञासुओं विशेषतः शोधछात्रोंके लिए अत्यन्त उपयोगी सिद्ध होगा, ऐसा मैं समझता हूँ। मैं इस ग्रन्थके अधिकाधिक प्रसारके लिये हार्दिक शुभकामना करता हूँ।

का० श्रीमाली
कुलपति
काशीहिन्दूविश्वविद्यालय वाराणसी

६।९।७४

## शुभाशीर्वादाः

परमहंसपरिव्राजकाचार्याणामभिनवशंकरविभूतीनामनन्त-
श्रीविभूषितानां श्रीकरपात्र-
स्वामिचरणानाम्—
श्रीहरिः, गङ्गामहल, केदारघाट, वाराणसी

शुद्धभाद्रपदकृष्ण ६ सोमे सं० २०३१

श्रीमन्तो लब्धवर्णप्रतिष्ठिता विद्वत्तल्लजाः श्रीकेदारनाथत्रिपाठिमहाभागाः सांख्ययोगशास्त्रे व्यवहृतानां पारिभाषिकशब्दानां कोषं निबबन्धुः। यस्मिन् विभिन्नेष्वर्थेषु तन्त्रान्तरे व्यवहृतान् लोके च प्रचलितान् तांस्तान् शब्दान् केषु केषु अर्थेषु सांख्ययोगाचार्या व्यवहृतवन्त इति विस्तरशः प्रतिपादयामासुः। तदेतेन कोषरत्नेन बोद्धारो झटित्यर्थग्रहं लभेरन्निति अस्य ग्रन्थरत्नस्य प्रचयगमनाय एतेभ्यः श्रीकेदारनाथत्रिपाठिमहोदयेभ्यो दीर्घायुष्याय च नारायणस्मरणात्मकाः शुभाशीराशयो वितीर्यन्ते, शमिति—

करपात्रस्वामी

अनन्तश्रीविभूषितानां काशीस्थोर्ध्वाम्नायसुमेरु-
पीठाधीश्वराणां जगद्गुरुशङ्कराचार्याणां
स्वामिश्रीमहेश्वरानन्दसरस्वती-
पादानाम्—

शुद्धभाद्रपदकृष्णत्रयोदशी गुरुवासरे
संवत् २०३१

संख्यावद्भिर्विसंख्यैः प्रगुणितगरिमाख्यातबुद्धिर्विशुद्धिः ।
मुग्धो दुग्धेन्दुशुद्धः श्रुतनुतमहिमाज्ञाततत्त्वान्तरात्मा ॥
नित्यानित्यैकरूपः प्रथितगुणनिधिर्ध्यातृवर्गैरधीतः ।
सांख्ये प्रोक्तः पुराणः कपिलमुनिवरैर्वर्णितश्चैष शुद्धः ॥ १ ॥

आकाशचूम्बियशसां महतां महिष्ठैः,
टीकाकृतां वलय उच्छ्रितिमाश्रयद्भिः ।
वाचस्पतीति कृतनामवतां वरिष्ठैः,
या कौमुदीति विदिता ननु टीकिताऽऽस्ते ॥ २ ॥

सांख्ये योगे गरिष्ठे कृतगुणमहिमा कोषकारो महेच्छः ।
श्रीश्रीविद्यालयेऽस्मिन् नरिर्नरि विदिते मालवीयस्य कार्ये ॥
श्रेष्ठो निष्ठागरिष्ठः श्रुतनुतगरिमागौरवागूरितश्रीः ।
श्रीमान् केदारनाथोऽयमिह विजयते कोऽपि विद्वान् मनीषी ॥३॥

महेश्वरानन्दसरस्वती

## विदुषां सम्मतयः

काशीहिन्दूविश्वविद्यालये संस्कृतमहाविद्यालयस्य
भूतपूर्वाध्यक्षाणां गुरुवर्याणां पण्डितराज-
श्रीकालीप्रसादमिश्रमहानुभावानाम्—

न्यायवेदान्तसांख्ययोगाचार्याः पण्डितप्रवराः श्रीकेदारनाथत्रिपाठिनो महता श्रमेण सांख्ययोगशास्त्रयोस्तत्तच्छास्त्रीयपारिभाषिकशब्दैस्सहैतयोः सिद्धान्तञ्च पृथक्कृत्य कोशद्वयमभिनवं परमोपकारकं प्रणीतवन्तः। यद्यप्यस्य ग्रन्थस्यावलोकनाय प्रचुरसमयस्यासीदपेक्षा किन्तु नवीनकृति-तल्लजस्यास्य दर्शनेन जातकुतूहलोऽहं त्वरितं त्रिचतुरस्थलविशेषेषु सोत्कण्ठं दृष्टिं प्रसार्य ग्रन्थकर्तुरस्य विवेचनापद्धतिं निभाल्य नितान्तप्रमोद-मनुभवन्नहं ग्रन्थेनानेन दर्शनशास्त्रं प्रविविक्षूणां महान्तमुपकारं प्रत्येमि शुभाशिषा चैनमभियोजयामि।

कालीप्रसादमिश्रः
२०।८।७४

वाराणसेयसंस्कृतविश्वविद्यालये न्यायवैशेषिकविभागा-
ध्यक्षपदमलङ्कुर्वतां पण्डितराजश्रीबदरीनाथ-
शुक्लमहाभागानाम्—

दर्शनशास्त्रं भारतस्य मनीषाया रमणीयतमः परिणामः। तत्र साङ्ख्यशास्त्रं योगशास्त्रञ्चातिप्राचीनमध्यात्मविद्यायाः प्राणभूतञ्च। साङ्ख्यशास्त्रं महर्षिकपिलप्रणीतं संस्कृतवाङ्मये बहुत्र वैपुल्येन प्रसृतम्। योगशास्त्रमपि महर्षिपतञ्जलिप्रणीतमनेकत्र संस्कृतसाहित्ये सुसन्दृब्धम्। द्वयोरनयोरेष संस्कृतवाङ्मयव्यापी प्रसारः स्पष्टमेव

तयोर्महनीयतां व्यनक्ति । परमतीवोपयोगिनोरप्यनयोः शास्त्रयोः विषया यत्र तत्र तथा विकीर्णा यथा तेषां समेषामाकलनं पण्डितानामपि कठिनायते । बहोः कालाद् विपश्चितो विविदिषवश्चैवं कामयमाना आसन् यत् काचनेदृशी कृतिरत्यन्तमावश्यकी यया साङ्ख्ययोगयोः विषयाः पारिभाषिकाः शब्दाश्च सम्यक्तया प्रमातुं पार्येरन् । पण्डितप्रवरेण श्रीकेदारनाथत्रिपाठिमहोदयेन साङ्ख्ययोगकोशनामानं ग्रन्थं निर्माय विदुषां चिराकाङ्क्षायाः पूर्तिः कृता । श्रीत्रिपाठिनः कार्यमिदमत्यपूर्वं प्रामाणिकं काशीहिन्दूविश्वविद्यालये तत्प्रसाध्यमानस्य दर्शनविभागाध्यक्षपदस्यानुरूपञ्च ।

विश्वसिमि, श्रीत्रिपाठिनः प्रतिमापरिश्रमयोर्योगेन प्राप्तप्रसवःप्रबन्ध एष विपश्चिदपश्चिमानामपि महते मोदाय कल्पेत ।

बदरीनाथशुक्लः
१५–७–७४

**T. R. V. Murti**

Eminent Professor of Philosophy
Banaras Hindu University ( Retd )

46 A, Ravindra Puri ( Newcalony )
Varanasi--5
August 17, 1974

ग्रन्थद्वयमिदं सांख्ययोगकोशाख्यं विद्वद्वरेण श्रीकेदारनाथत्रिपाठिना निपुणतरं निबद्धमिति प्रतिभाति । सांख्ययोगदर्शनशास्त्रीया विषयाः सर्वे साकल्येन लक्षणकल्पैः सारवद्भिः स्वल्पाक्षरैर्यथाशास्त्रं विशदीकृता वर्तन्तेऽत्र । बहुषु स्थलेषु वाचस्पति-विज्ञानभिक्षु-भोज-नागोजीभट्ट-प्रभृतीनां मतभेदाः सप्रमाणमुपन्यस्ताश्च सन्ति । सुधियां दार्शनिकानां

सदा मुदं तनोति कोशरत्नद्वयमिदमित्यत्र न स्यात् काचिद् विप्रतिपत्तिः। अधिकृत्य सांख्ययोगशास्त्रं किमपि मौलिकान्वेषणगर्भं ग्रन्थान्तरं च विरचय्य नातिचिरादेव विदुषां स्वान्तमाह्लादयति पण्डितप्रवरोऽयमित्याशास्ते—

तिo राo वेङ्कटाचलमूर्तिशर्मा

**Dr. Siddheshvara Bhattacharya**

Director of Sanskrit studies and Resarch,
Mayurbahanj Professor of Sanskrit and Head of the Deptt. sanskrit and Pali, ( Retd )
Banaras Hindu University.
Varanasi--5
Date 19. 8. 74

काशीहिन्दूविश्वविद्यालयीय—प्राच्यविद्याधर्मविज्ञानसंकाये दर्शन-विभागाध्यक्षा· श्रीकेदारनाथत्रिपाठिनः परिशील्यमान-सांख्ययोगकोश-कर्तारो विराजन्ते। श्रीमतां कृतिरियं प्रशस्तिमर्हति। प्रायशो दर्शन-शास्त्रे प्रविविक्षूणां पारिभाषिकशब्दार्थज्ञानाभावात् सुष्ठु गतिर्न भवतीति मनसि निधाय सूक्ष्मेक्षिकया तत्तच्छब्दार्थानां कोशेऽस्मिन् तथा निर्वचनं विहितं यथा तान् परिगृह्य सांख्ययोगशास्त्रकान्तारम् उद्यानायितं स्यात्। शब्दार्थानां परिष्कार आकरग्रन्थभित्तिक इति कोशोऽयं प्रामाण्यमावहति। आशासे प्रयत्नोऽयं बहुलप्रचारतामुपगमिष्यतीति—

शंसति
सिद्धेश्वरभट्टाचार्यः

विद्यासागर-विद्यावाचस्पति-शास्त्ररत्नाकराणां वाराणसेय-
संस्कृतविश्वविद्यालये भूतपूर्वसाहित्यविभागा-
ध्यक्षाणां पण्डितराजश्रीपट्टाभिराम-
शास्त्रिमहानुभावानाम्–

पण्डितवरैराचार्यश्रीकेदारनाथत्रिपाठिमहोच्छैर्विरचितं साङ्ख्ययोग-कोशाभिधं ग्रन्थं समग्रमपठम् । साङ्ख्ये योगे च प्रचलितान् शब्दानेकी-कृत्याकारादिक्रमेण च तान् संयोज्य तेषां मतभेदानुसारेणार्थान् प्रादर्शयन् । शास्त्रयोरनयोः प्रविविक्षूणामन्तेवासिनां ज्ञानावाप्तयेऽर्थावबोधाय च सुमहदानुकूल्यमाचरेदयं ग्रन्थ इति निस्सङ्कोचं ब्रवीमि । त्रिपाठिमहो-दयानां परिश्रमं सफलयितुमहं वाञ्छामि, यदयं ग्रन्थशिक्षणसंस्थासु पाठ्यक्रमे सन्निवेशनीय इति । एतादृशानि कार्याणि बहून्यन्यानि कुर्वन्तः पण्डितवराः श्रीत्रिपाठिनः संस्कृतवाङ्मयं परिवर्द्धयेयुरिति सम्भावयामि ।

पट्टाभिरामशास्त्री
१८-८-७४

काशीहिन्दूविश्वविद्यालये प्राच्यविद्याधर्मविज्ञानसंकायप्रमुखाणां
ज्योतिषदिवाकराणां पण्डितश्रीराजमोहन-
उपाध्याय [ ज्योतिषशास्त्राचार्य,
एम. ए., पी. एच. डी. ]
महोदयानाम्—

दर्शनविभागाध्यक्षेण पण्डितश्रीकेदारनाथत्रिपाठिना विरचितं सांख्य-योगकोशांख्यमभिनवं पुस्तकं मया सम्यगवलोकितम् । अद्यावधि सांख्य-योगशास्त्रयोः कोशस्य निर्माणं न केनापि विदुषा सम्पादितम् ।

गतसत्रारम्भे मया निवेदितं यत् सांख्ययोगयोः भवद्भिः किमपि एतादृशं नूतनं कार्यं करणीयं येनास्य संकायस्य भवतां च गौरवं वर्धेत । अतिस्वल्पेनैव कालेन अतिश्रमेण प्रतिभासम्पन्नैरेभिर्महाभागैः यदिदं कार्यं सम्पादितं तेनेदं स्पष्टं प्रतिभाति यदस्माकं संकाये एतादृशाः सुमहान्तः पण्डिताः सन्ति येषां करामलकवत् शास्त्रज्ञानमस्ति । इदन्तु निश्चप्रचं यत् प्रौढज्ञानमन्तरा न कोऽपि एतादृशं ग्रन्थरत्नमतिस्वल्पेन कालेन निर्मातुं क्षमो भवितुमर्हति । एभिरन्येऽपि दर्शनग्रन्थाः निर्मिताः सन्ति प्रकाशिता-प्रकाशिताः । मन्ये, अग्रेऽपि स्वकीयं गवेषणात्मकं सांख्ययोगशास्त्रयो कार्यमेते महानुभावाः विधास्यन्तीति शम् ।

राजमोहन उपाध्यायः
२३।८।७४

स्मृतिमात्रेण शेषेषु, पादपद्मेषु पूज्ययोः ।
पित्रोः सांख्यपदाब्जानां, कोश एष मुदेऽर्प्यते ॥

# प्रस्तावना

अथेयं प्रस्तूयते सांख्यकोशो नामाभिनवा कृतिरन्तेवासिगणकल्याणाय विद्वज्जनमोदाय चेदानीम्। तत्र यद्यपि विद्यानां चतुर्दशप्रस्थानेषु अष्टादशसु वा परिगणितेषु सांख्यशास्त्रस्य साक्षान्नाम न श्रूयते तथापि न्यायस्यानेकात्मप्रतिपादकत्वात् अनेकात्मप्रतिपादकानि वैशेषिकसांख्ययोगशास्त्राण्यपि 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश' ॥ इति वचने न्यायविस्तरपदेन संगृहीतानीति मन्तव्यम्। श्वेताश्वतरोपनिषदि भगवद्गीतायाञ्च बहुधा सांख्यस्य चर्चा समायातीत्यस्य शास्त्रस्यातिप्राचीनत्वं निश्चप्रचम्। दर्शनाय शास्त्रं दर्शनशास्त्रमिति व्युत्पत्त्या सर्वाण्येव न्यायादिशास्त्राणि तत्त्वज्ञानात्मकदर्शनरूपाय प्रयोजनाय प्रवृत्तानीति तानि दर्शनशास्त्राणीत्युच्यन्ते। दर्शनशब्दप्रयोगस्य च मूलम्—'सत्यधर्माय दृष्टये, आत्मा वा अरे द्रष्टव्यः, तस्मिन् दृष्टे परावरे' इत्याद्याः श्रुतयः सन्ति। यच्च द्रष्टव्यं तत् तत्त्वम् आत्मैवेत्यपि तास्वेव श्रुतिषु सङ्केतितमासाद्यते। अतो वैशद्येन प्राधान्येन प्राथम्येन चात्मतत्त्वविचाराय प्रवृत्तमिदं प्राचीनतमं सांख्यशास्त्रं भगवद्गीतायामुपनिषत्सु पुराणादिषु च सर्वमूर्धन्यत्वेन जेगीयमानमास्ते इति सर्वथा समुचितमेव।

सांख्यशब्दो हि गणनार्थकेन ज्ञानार्थकेन वा संख्याशब्देन निष्पन्न इति विचारे ज्ञानार्थकसंख्याशब्देन सांख्यशब्दो निष्पन्न इत्येव मतं मुख्यमिति प्रतिभाति भाष्यटीकादिकर्तृवचनेभ्यः।

## सांख्यशास्त्रप्रवर्तकः

महर्षिः कपिल एव सांख्यशास्त्रप्रवर्तकतया श्रुतिस्मृतीतिहासपुराणेषु प्रसिद्धः। अत्र भारतीयशास्त्रपरम्परासु कुत्रापि विप्रतिपत्तिर्नास्ति। श्रुतिस्तावत्—'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत्' इति।

स्मृतिश्च—'सांख्यस्य वक्ता कपिलः, परमर्षिः स उच्यते'। महाभारतम् शान्तिपर्व ३३०।६०। श्रीमद्भागवगतेऽपि महर्षिः कपिल एव सांख्यशास्त्रप्रवर्तकत्वेनोक्तः। गरुडपुराणेऽपि तथैवोक्तम्। यथा—

पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम्।
प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम्॥ १।१।१८

मत्स्यस्कन्दविष्णुपुराणेष्वपि कपिलस्य सांख्यकर्तृत्वम् प्रतिपादितम्। सांख्य शास्त्रीयग्रन्थकारास्तट्टीकाकाराश्चापि सांख्यशास्त्रप्रवर्तकत्वेन कपिलमेवैकमत्येन स्मरन्ति। अतिप्राचीनः सांख्यकारिकाकारः कपिलं मुनिपरमर्षिशब्दाभ्यां स्मरति। सां० का० ६९-७०।

स च कपिलो ब्रह्मणः पुत्र इति गौडपादाचार्याः स्मरन्ति : यथा—इह भगवान् ब्रह्मसुतः कपिलो नाम इति। ( सां० का० गौडपादभाष्यम् पृ० १ )। स्वायम्भुवस्य मनोर्दुहितरि देवहूत्यां महर्षेः कर्दमाद् भगवान् विष्णुरेव कपिल-रूपेणावततारेति श्रीमद्भागवतम्। यथा—

तस्यां बहुतिथे काले भगवान् मधुसूदनः।
कार्दमं वीर्यमापन्नो जज्ञेऽग्निरिव दारुणि॥
अयं सिद्धगणाधीशः सांख्याचार्यैः सुसम्मतः।
लोके कपिल इत्याख्यां गन्ता ते कीर्तिवर्धनः॥
( ३।२४।६-१९ )

तथा—कपिलस्तत्त्वसंख्याता भगवानात्ममायया।
जातः स्वयमजः साक्षादात्मप्रज्ञप्तये नृणाम्॥ ( ३।२५।१ )

क्वचिदग्न्यवतारत्वेनापि स्मर्यते। यथा महाभारते—

कपिलं परमर्षिञ्च यं प्राहुर्यतयः सदा।
अग्निःस कपिलो नाम सांख्ययोगप्रवर्तकः॥
( वनपर्व २११।२१ )

'समस्ततत्त्वानां सकलषष्ठितन्त्रार्थानाञ्च सूचकं षडध्याय्या अपि बीजभूतं तत्त्वसमाससूत्रं नारायणावतारमहर्षिकपिलप्रणीतम्। षडध्यायी तु वैश्वानरावतारभूतमहर्षिभगवत्कपिलप्रणीतेति वृद्धाः'' इत्याह सर्वोपकारिणीवृत्तिकारः। अत्र 'वृद्धाः' इति कथनेन स्वपूर्वतनाचार्यसम्मतिमपि स प्रदर्शयति।

किन्त्वेतत् कपिलद्वैविध्यत्रैविध्यकथनं भ्रम एवेति श्रीमदुदयवीरशास्त्रिणा संसाधितमेकत्वञ्च स्थिरीकृतम्। ( सांख्यदर्शनकाइतिहास पृ० ८-१२ )। एतदनुसारं महाभारतमतेनापि सांख्यप्रवर्तकः कपिलो विष्णोरवतार एव किन्तु स क्रोधाग्निना सगरपुत्रान् भस्मीचकारेति तस्याग्नित्वं प्रसिद्धमभूत् इति। सांख्यप्रवचनभाष्यकर्ताऽपि कपिलद्वैविध्यं प्रकामं निराकरोति। ( द्र० सां० प्र० भा० अ० ६ सू० ७ )।

महर्षिकपिलः कुत्र कदाऽऽविर्बभूवेत्यत्रापि मतभेदोऽस्ति। केषाञ्चिन्मतेन स नैतिहासिकः पुरुषोऽस्ति। तत्र च 'आदिविद्वान् निर्माणचित्तमधिष्ठाय कारुण्याद् भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाच' इति योगभाष्यकारस्योक्तिं प्रमाणतयोपस्थापयन्ति। किन्तु निर्माणचित्ताधिष्ठानं पाञ्चभौतिकशरीरेऽवतीर्णेनापि भगवता शक्यमतः कपिलमहर्षेरैतिहासिकपुरुषत्वे न सन्देहावसर इति सत्कौरीमहाशया अभिप्रयन्ति :

कपिलवस्तु ( कपिलवत्थु ) नाम नगरं भगवतो बुद्धस्य जन्मस्थानं, तदेव हि महर्षेः कपिलस्यापि जन्मस्थानमिति जनरलकनिंघममहोदयाः। गार्वेमहोदया अपि तथैव मन्यन्ते। बौद्धधर्मः सांख्यदर्शनस्य महानधमर्ण इति स्वनिश्चयेन गार्वेमहोदयः स्वमतं द्रढयितुं चेष्टते। तन्मतेन 'कपिलवत्थु' इति पालिशब्दस्य 'कपिलवास्तु' इत्येव संस्कृतरूपान्तरं न तु 'कपिलवस्तु' इति। डा० आद्याप्रसादमिश्रस्तु कपिलवस्तुनाम्ना न महर्षेः कपिलस्य संबन्धः किन्तु कस्यचित् शाक्यवंशीयस्य शूरस्य क्षत्रियस्य पूर्वजस्य स्यादिति प्रतिपादयन् गार्वेमहोदयस्य खण्डनं करोति। सुत्तनिपातकथानुसारमश्वघोषस्य सौन्दरानन्दकाव्यानुसारञ्च महर्षेः कपिलस्य नाम्नैव कपिलवास्तु' इति नामाभूत् इति। यथा—

कपिलस्य च तस्यर्षेस्तस्मिन्नाश्रमवास्तुनि ।
यस्मात्ते तत्पुरं चक्रुस्तस्मात् कपिलवास्तु तत् ॥
( सर्गः १२ श्लो० ५७ ) ।

इदं हि मतं सम्यक् प्रतिभाति ।

श्रीमद्भागवतादिप्रामाण्यात् सरस्वत्यास्तीरे बिन्दुसरःसमीपवर्तिनि कस्मिंश्चिदाश्रमे महर्षिकपिलः कर्दमदेवहूत्योः पुत्ररूपेण जनिमलभत । तदाश्रमस्थानञ्च महाभारतरामायणादीननुसृत्य हिमालयमध्ये इदानीं मानसरोवरनाम्ना प्रसिद्धात् सरोवरात् पश्चिमदिशि कुत्रचिदासीदिति निरूपितं प्रतीयते । तेन निरूपणेन कपिलवास्तुनगरस्य कपिलमहर्षिसम्पर्को न निराक्रियत इति तर्कयन्ति विद्वान्सः । अतो बिन्दुसरःसमीपस्थ आश्रमे जनिमासाद्यापि महर्षिः कियन्तं कालं कपिलवास्तुसन्निहिते प्रदेशे आश्रमं निर्मायोवासेत्यत्र नास्ति किमप्यसामञ्जस्यम् ।

बौद्धमतस्य प्रादुर्भावक्षेत्रे सांख्यदर्शनस्य महीयान् प्रभाव आसीदिति गार्बेमहाशयस्यानुमानम् । डा० कीथमहोदयस्तु उभयोरप्युपनिषन्मूलत्वं प्रतिपादयन् बौद्धधर्मस्य सांख्याधमर्ण्यं निराकरोति । किन्तु एवं स्वीकारेऽपि भारतवर्षस्य पूर्वप्रान्ते बुद्धसमये सांख्यप्रभावसंभावना न निराकर्तुं शक्यते । गौतमो गृहादभिनिष्क्रम्य प्रथममेव धर्मलाभार्थं कालायसगोत्रीयमण्डनामानं कञ्चित्तपस्विनं गुरुं चकारेति बुद्धचरितादवगम्यते । अयमण्डः कपिलमतानुसारी आसीत् । तथा च तद्वचनम्—

तत्र तु प्रकृतिं नाम विद्धि प्रकृतिकोविदः ।
पञ्चभूतान्यहङ्कारं बुद्धिमव्यक्तमेव च ॥ इति ।

अण्डगौतमवृत्तान्तो न केवलमश्वघोषेणैवेदम्प्रथमतया वर्णितः किन्तु स्थविरवादिशास्त्रेऽपि अण्डः 'आलारकालाम' इति नामधेयेनोपलभ्यते । तस्माद् बुद्धप्रादुर्भावकाले कपिलवास्तुसन्निहिते प्रदेशे सांख्यदर्शनस्य भूयान् प्रचार आसीदिति नात्र संशयलेशोऽपि ।

इत्थं कपिलवास्तुसन्निहितप्रदेशे कञ्चित् कालं स्थित्वा पुनः रामायणमहाभारतानुसारं सगरराजस्य षष्टिसहस्रं पुत्रान् यत्र भस्मीचकार स कपिलाश्रमः

कुत्रचित् समुद्रकूल एवानुसन्धेयः। तत्र च भस्मीभूतानां सगरपुत्राणामुद्धारार्थं सगरवंशीयेन भगीरथेन स्वपोबलेन भगवती भागीरथी धरातलं समानीता तान् पुत्रानुद्धृत्य तत्रैव समुद्रे विवेश। गङ्गायाः समुद्रप्रवेशश्च कपिलाश्रमसन्निधौ यत्र सगरपुत्रा भस्मीभूतास्तत्रैव जात इत्यपि संगतमेवास्ति। अतो गङ्गासागर-सङ्गमे कपिलमुनिराश्रमं निर्मायोवासेति नेतिहासविरुद्धम्। स च सङ्गमो वङ्गप्रान्ते कालिकात्तातश्चत्वारिंशे क्रोशे वर्तते। अतो महर्षिकपिलो हिमवत्प्र-देशवर्तिनि विन्दुसरःसन्निकर्षे जन्म लब्ध्वा कपिलवास्तुसमीपे कञ्चित् काल-मुषित्वाऽन्ते गङ्गासागरसङ्गमवर्तिनि आश्रमे उवासेति निष्कर्षः।

## महर्षिकपिलसमयः

महर्षेः कपिलस्य निश्चयेन कालनिरूपणं दुष्करम्। तन्निश्चयस्योप-निषन्महाभारतादिकालनिर्णयाधीनत्वात्। तेषामपि कालविषयेऽद्यापि ऐतिहा-सिकानां परस्परं भृशं मतानैक्यमेवास्ति। डा० आद्याप्रसादमिश्रमहोदयेन सुष्ठु निरूपितं यत् शतपथब्राह्मणसङ्कलनादपि पूर्वं महर्षिः कपिल आविर्बभूवेति। अतः कपिलाविर्भावकालो न्यूनतया पञ्चसहस्रवर्षेभ्यः पूर्वमेवासीत्, न तु कथमपि ततोऽर्वाचीन इति।

## कपिलस्य कृतिः

यथा न्यायादिदर्शनानां सूत्राणि गौतमादिकृतानि तथा सांख्यस्यापि दर्शनत्वेन तस्यापि सूत्रकारेण भाव्यम् इति विदुषामनुमानं सर्वथा समीचीनमेव! तत्र द्वौ सूत्रग्रन्थौ सांख्यस्य वर्तेते। किन्त्विदानीन्तना विद्वान्स उभयोरप्यर्वाचीनत्वं मन्यन्ते। सांख्यकारिकामेवेश्वरकृष्णकृतां प्राचीनतमां मन्यन्ते। तस्याः कापि टीकाऽऽसीत् यस्याष्टीकायाश्चीनभाषायामनुवादः परमार्थनाम्ना उज्जयिनीवास्तव्येन बौद्धभिक्षुणा ख्रीस्तीयषष्ठशताब्द्याः पश्चिमे भागे कृतः। ईश्वरकृष्णादिसांख्य-ग्रन्थकर्तॄणां ग्रन्थेभ्योऽपि षडध्याय्याः कोऽपि परिचयो न लभ्यते। शङ्कराचार्ये-णापि कारिकैवोद्धृता शारीरकभाष्ये। यद्युभौ सूत्रग्रन्थौ कपिलप्रणीतौ तदा मनीषिभिस्तदुपेक्षायाः किमपि कारणं न प्रतीयते। तस्मात् षडध्यायी ख्रीस्तीय-नवमशताब्द्या अनन्तरमर्थात् वाचस्पतिमिश्रादनन्तरं, तत्त्वसमासश्च ततोऽप्यूर्ध्वं

विरचित इति नवीनानां सिद्धान्तः। गार्वेमहोदयमतेन षडध्यायीरचनाकालः ख्रीस्तीयचतुर्दशशताब्दी एव। किन्तु डा सुरेन्द्रदासगुप्तमहोदयः षडध्यायीं तावतीमर्वाचीनां न मन्यते।

वस्तुतः कपिलस्य का कृतिरिति जिज्ञासायाः समाधानं सुकरं न प्रतिभाति। ईश्वरकृष्णकारिकाणां द्विसप्ततितमकारिकादर्शनात् तदुपजीव्यग्रन्थस्य षष्टितन्त्रमति नामासीदिति प्रतीयते। अतः कपिलकृतमूलग्रन्थ एव षष्टितन्त्राख्य आसीत्, स चेदानीं लुप्त इत्येके वदन्ति। सांख्यप्रवचनसूत्रापराभिधानाऽद्यत्वे बहुप्रचलिता सूत्रषडध्याय्येव कपिलकृतं षष्टितन्त्रमित्यन्ये। विज्ञानभिक्षुरपि षडध्यायीमेव कपिलकृतां मन्यते। ( द्रष्टव्यम् योगवार्तिकम् पा० सू० २४ )। परिमितपदैः सांख्यतत्त्वानां प्रतिपादकः परमतखण्डनवर्हितस्तत्त्वसमास एव कपिलकृतिरित्यपरे।

## षष्टितन्त्रम्

कपिलसिद्धान्तस्य कपिलकृतेर्वा षष्टितन्त्रनाम्नाऽभिहितत्वे तद्गतविचार्यमाणविषयाणां षष्टिसंख्याकत्वमेव निदानम्। षष्टिविषयाश्च—पञ्च विपर्यया, नव तुष्टयः, अष्टौ सिद्धयः, अष्टाविंशतिरशक्तयः, दश मौलिकार्थाश्चेति उदयवीरशास्त्री। इदमेव परिगणनं सांख्यतत्त्वकौमुदीकर्तुरभिप्रेतम्। तथा च ग्रन्थान्ते प्रतिपादितं राजवार्तिकोद्धरणद्वाराऽऽचार्यवाचस्पतिमिश्रेण—'सेयं षष्टिपदार्थी कथिते सकलशास्त्रार्थकथनान्नेदं प्रकरणमपि तु शास्त्रमेवेदमिति सिद्धम्।' इति श्रीमिश्राः संख्यकारिकाणां शास्त्रत्वमङ्गीकुर्वन्ति। साक्षात्कपिलप्रणीते सूत्रग्रन्थे विराजमाने मिश्रपादसदृशा आस्तिकमूर्धन्यास्तदन्यकर्तृकं ग्रन्थं शास्त्रतयाङ्गीचक्रुरिति नात्र मनः प्रत्ययमासादयति। अतो वाचस्पतिमिश्रसमयात् पूर्वमेव कपिलनिर्मितो मूलग्रन्थो लुप्तोऽभवदिति निश्चिन्वन्ति सात्कौरीमहाशयाः सांख्यसंग्रहप्रस्तावनायाम्।

एवं सूत्रषडध्याय्याः केषुचित् सूत्रेषु अनन्तरकालरचितसूत्राणां खण्डनं दृश्यते। अतोऽप्यर्वाचीना षडध्यायी। विशेषतः सूत्रषडध्यायी उत्तरकालवर्तिवेदान्तसिद्धान्तप्रभावं प्रकटयतीति गार्वेमतं विशेषावधानयोग्यतामासादयति।

किन्तु सूत्रषडध्यायीतत्त्वसमाससूत्रगतवचनानां भूयःसु प्राचीनग्रन्थेषूपलम्भात् तो सांख्यग्रन्थौ रवीस्तीयचतुर्दशशतकोद्भूताविति पक्षः सुष्ठु निराक्रियत उदयवीरशास्त्रिभिः ।

वस्तुतः सप्ततितम ( ७० ) सांख्यकारिकानुसारं महर्षिः कपिलः श्रुत्युदितं सांख्यतत्त्वमासुरये प्रदत्तवान्, आसुरिरपि पञ्चशिखाय प्रदत्तवानेव न तु कृतवान् किमपि ग्रन्थजातम् । यथा हि गुरुः शिष्यान् वेदमुपदिशत्येव त न करोति, तद्वत् इति प्रतीयते । इत्थं गुरुपरम्परया प्रचलितं सिद्धान्तमवलम्ब्मो केनापि सांख्याचार्येण प्रथमं तत्त्वाम्नायपरं संक्षेपेण तत्त्वसमाससूत्रं व्यरचि दनन्तरञ्च दर्शनान्तरीयसूत्रग्रन्थानुकरणेन केनाप्यपरेण प्रतिभावताऽऽचाचार्येण सूत्रषडध्यायी निर्मिताऽभूत् । एतयोरपि सांख्यकारिकानिर्माणत् पूर्वं परं वा निर्माणं जातमिति जिज्ञासायां माध्यस्थ्यमेवावलम्बते सात्कौरीशास्त्री । एतदनुसारमीश्वरकृष्णसमये तयोर्विद्यमानत्वेऽपि ऋषिप्रणीतत्वाभावात् टीकाकर्तॄणां तयोरनादरः कारिकाणाञ्च सुव्यवस्थितत्वात् तत्र समादरश्चाभूतामित्येव सङ्गतमिति शास्त्रिणोऽभिप्रायः । किन्तु तत्त्वसमाससूत्रषडध्याय्योरीश्वरकृष्णसमये विद्यमानत्वं सम्भावयन्तोऽपि सात्कौरीशास्त्रिणः कथं तयोःऋषिप्रणीतत्वाभावं निश्चिन्वन्ति कथन्तराञ्च कारिकाणामेव सुव्यवस्थितत्वं मन्यन्त इति न वयं विद्मः । अतोऽस्मद्विचारानुसारं विपयोऽयमवशिष्यत एवानुसन्धानायेति विभावयामः ।

आसुरिणाऽपि कोऽपि सांख्यग्रन्थो निर्मितो न वेति निर्णेतुं न शक्यते । तदनन्तरं तच्छिष्यत्वेन पञ्चशिखाचार्यः प्रसिद्धः । तेन सांख्यशास्त्रस्य भूयान् प्रचारो विहितः । कपिलमहर्षेः पाञ्चभौतिकशरीरे विद्यमान एव पञ्चशिखाचार्यो जनकसभायामन्यत्र च महतीं प्रतिष्ठां लब्धवानभूत् । तेन निर्मितः सूत्रग्रन्थो न समग्रतयोपलभ्यते । किन्तु योगभाष्ये तत्प्रणीतानामेकविंशतिसूत्राणामुद्धरणमुपलभ्यते । गौडपादाचार्योऽपि कारिकाभाष्ये—सनकश्च सनन्दश्च, तृतीयश्च सनातनः । आसुरिः कपिलश्चैव वोढुः पञ्चशिखस्तथा ॥ इति ब्रह्मपुत्रान् स्मरति । अत्र सांख्याचार्यपरम्परा प्रतिपादितेति वक्तुं न शक्यते, केवलं ब्रह्मसुतत्वेन तेषां निर्देशात् । तेषु च कपिलो वोढुरासुरिः, पञ्चशिखश्च सांख्याचार्य-

आसन्नित्यत्र सर्वेषामैकमत्यमस्ति। सनन्दोऽपि सांख्याचार्य आसीदिति मनुस्मृतेः कुल्लूकभट्टटीकायामुक्तम्। एतदतिरिक्ताः पुलहपुलस्त्यमरीचिप्रभृतयः प्राचीनाः, जैगीषव्यवार्षगण्यविन्ध्यवासिप्रभृतयश्च तदपेक्षयाऽर्वाचीना इति प्रायश्चत्वारिंशत्संख्याकाः सांख्याचार्याः स्मर्यन्ते। साङ्ख्याचार्याणां विषये वैशद्येन पृथग् विचारोऽपेक्षितोऽस्तीति नेह प्रतन्यते।

इत्यञ्च सत्स्वपि नैकेषु सांख्याचार्येषु शास्त्रमिदं न तथा पल्लवान् समासादयद् यथेतराणि शास्त्राणि। तथापि समुपलब्धग्रन्थसम्पत्त्यापि सांख्यदर्शनस्य साङ्गोपाङ्गसिद्धान्ताः अस्मद्दृष्टिगोचरतामायान्तीति महान् सन्तोषोऽनुभूयते। तान् ग्रन्थानाधृत्यैव मयाऽयं सांख्यकोशो निर्माय विदुषां समक्षमुपस्थाप्यते। अनेन मदीयप्रयासेन यदि विदुषां सन्तोषो जिज्ञासूनां लाभश्च भवेत्तदाऽऽत्मानं कृतार्थं मन्ये इति शम्।

केदारनाथत्रिपाठी
काशी हिन्दू विश्वविद्यालय।
वाराणसी

मार्च, १९७४

# संकेतार्थाः

| | | |
|---|---|---|
| सां० द० अ० सू० | = | सांख्यदर्शनम्, अध्यायः, सूत्रम् । |
| सां० का० | = | सांख्यकारिका । |
| त० सू० | = | तत्त्वसमाससूत्रम् । |
| सां० त० कौ० का० | = | सांख्यतत्त्वकौमुदीकारिका । |
| सां० सू० अ० वृ० | = | सांख्यसूत्रस्य अनिरुद्धवृत्तिः । |
| सां० सू० वृ० सा० | = | सांख्यसूत्रवृत्तिसारः । |
| सां० प्र० भा० अ० सू० | = | सांख्यप्रवचनभाष्यम्, अध्यायः, सूत्रम् । |
| सां० का० गौ० पा० भा० | = | सांख्यकारिकागौडपादभाष्यम् । |
| अ० सू० | = | अध्यायः, सूत्रम् । |
| न्या० द० अ० आ० सू० | = | न्यायदर्शनम्, अध्यायः, आह्निकम्, सूत्रम् । |
| न्या० सि० मु० श० ख० | = | न्यायसिद्धान्तमुक्तावली, शब्दखण्डम् । |
| सां० सू० अनि० वृ० | = | सांख्यसूत्रस्य अनिरुद्धवृत्तिः : |
| सां० का० भा० का० | = | सांख्यकारिकाभाष्यम्, कारिका । |
| सां० का० मा० वृ० | = | सांख्यकारिकामाठरवृत्तिः । |
| यु० दी० | = | युक्तिदीपिका । |

———

॥ श्रीगणेशाय नमः ॥

# सांख्यकोशः

प्रणम्येशं गुरून् पितॄन् सांख्यशास्त्रपयोनिधेः ।
शब्दरत्नमयं कोशं सार्थमद्योद्धराम्यहम् ॥

**अकाम्यम्**—किमपि दृष्टमदृष्टं वा फलमनभिसन्धाय कृतं कर्म अकाम्यमुच्यते ।

**अक्कः**—गृहकोणः । यथा-अक्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् । ( सां० त० कौ० का० १ ) ।

**अजः**—जन्मरहितः । सांख्ये अजः पुरुषो भवति, अजा च प्रकृतिः ।

**अजवत्**—यथा अजनामके भार्याशोकमलिनचित्ते नृपे वशिष्ठेनोक्तस्याप्युपदेशबीजस्य नाङ्कुरः उत्पन्नः, तथैव रागादिमलिनचित्ते उपदेशरूपस्य बीजस्याङ्कुरोऽपि नोत्पद्यते । ( द्रष्टव्यम्–सां० प्र० भा० अ० ४ सू० २९ ) ।

**अणुनित्यत्वाभावः**—पृथिव्याद्यणूनां नित्यता नास्ति, तेषामणूनामपि कार्यत्वश्रुतेः । यद्यपि अणुकार्यत्वबोधिनी श्रुतिः काललुप्तत्वान्नोपलभ्यते, तथाप्याचार्यवचनात् स्मृतेश्चानुमेया । तथा च मनुः—अण्व्यो मात्रा विनाशिन्यो दशार्धानाञ्च याः स्मृताः । ताभिः सार्धमिदं सर्वं सम्भवत्यनुपूर्वशः । इति । ( द्रष्टव्यम्–सां प्र० भा० अ० ५ सू० ८७ ) ।

**अतैजसंचक्षुः**—इन्द्रियाणां प्राप्तप्रकाशकत्वमिति सांख्यसिद्धान्तः । अस्यां स्थितौ चक्षुषस्तैजसत्वं स्वीकरणीयम्, तेजस एव किरणरूपेणाशु दूरदूरतरापसर्पणदर्शनादित्याशङ्का न करणीया । अतैजसत्वेऽपि प्राणवदेव वृत्तिविशेषेण दूरदूरतरापसर्पणोपपत्तेः । यथाहि प्राणः शरीरमसन्त्यज्यैव नासाग्राद् बहिः कियद्दूरं प्राणनाख्यवृत्त्याऽपसर्पति, तथैव अतैजसमपि चक्षुर्देहमसन्त्यज्यापि

वृत्त्याख्यपरिणामविशेषेण झटित्येव सूर्यादिकं प्रत्यपसरेदिति। (द्र० सां० प्र० भा० अ० ५ सू० १०५)

अत्यन्तपुरुषार्थः—आध्यात्मिकाधिभौतिकाधिदैविकानां त्रिविधदुःखानामात्यन्तिकी निवृत्तिरेवात्यन्तपुरुषार्थः। तथा च सांख्यसूत्रम्—"अथ त्रिविधदुःखात्यन्त निवृत्तिरत्यन्तपुरुषार्थः" (अ० १ सू० १)

केवलपुरुषार्थशब्देन तु भोगापवर्गयोरुभयोर्बोधो भवति। तथा च गौडपादाचार्याः—पुरुषार्थो द्विविधः शब्दाद्युपलब्धिलक्षणो गुणपुरुषान्तरोपलब्धिलक्षणश्च। शब्दाद्युपलब्धिर्ब्रह्मादिषु लोकेषु गन्धादिभोगावाप्तिः। गुणपुरुषान्तरोपलब्धिर्मोक्ष इति। (सां० का० भा० ४२)।

अथ—अथेति शब्दोल्लेखः शास्त्रादौ मङ्गलार्थः। यथा "अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" इत्यत्र। (सां० द० अ० १ सू० १)।

अदृष्टनैरपेक्ष्यम्—अदृष्टं हि बुद्धिकार्यमतोऽहङ्काराद्युत्पत्तौ तत् महदादीनां सहायं भवतु नाम तथापि प्रकृतेः स्वकार्यकरणे अदृष्टसहकारिता नास्ति किन्तु अविवेक एव सहकारी भवतीति। (द्र० सां० सू० अ० वृ० अ० ३ सू० ६८)।

अद्वैतश्रुत्यविरोधः—सांख्यपद्धत्यनुसारं द्वैतसत्त्वेऽपि अद्वैतश्रुतिविरोधो नास्ति. रागिणां पुरुषातिरिक्ते वैराग्यायैव क्वचित् श्रुतावद्वैतप्रतिपादनात्। तथा च सांख्यसूत्रम्—"न श्रुतिविरोधो रागिणां वैराग्याय तत्सिद्धेः" (अ० ६ सू० ५१)।

अधर्मः—रजस्तमआत्मिकाया बुद्धेः कार्यभूतः।

अधिकारिणः—उत्तममध्यमाधमास्त्रिविधा ज्ञानाधिकारिणः। अर्थात् उत्तमाधिकारिणां श्रवणमात्रान्मुक्तिसिद्धिः। मध्यमाधिकारिणां श्रवणमननाभ्यां तथाऽधमाधिकारिणां त्रिभिः श्रवणमनननिदिध्यासनैर्मुक्तिसिद्धिरिति। अतो मन्दाधिकारदोषादेव विरोचनादीनां श्रवणमात्राच्चित्तविलापनक्षमं ज्ञानं नोत्पन्नम्। न तु श्रवणस्य ज्ञानजननासामर्थ्यमस्ति। इत्यश्चोत्तमाधिकारिणः

श्रवणमात्रान् मुक्तिसिद्धावपि दार्ढ्यार्थं मनननिदिध्यासने अपि विधीयेते। (द्र० सां० प्र० भा० अ० ६ सू० २२,२३)।

**अध्यवसाय:**—निश्चयाख्या बुद्धिवृत्तिः। सर्वो व्यवहर्ता पूर्वमिन्द्रियैः विषयानालोच्य, मनसा मत्वा, अहमत्राधिकृत इत्यहङ्कारेणाभिमत्य कर्तव्यमेतन्मयेत्यध्यवस्यति, ततश्च प्रवर्तते। तत्र योऽयं कर्तव्यमिति विनिश्चयः, सोऽध्यवसायः, बुद्धेरसाधारणो व्यापारः (द्र० सां० त० कौ० का० २३)।

युक्तिदीपिकायाञ्चोक्तम्—कोऽयमध्यवसायः? गौरेवायं, पुरुष एवायमिति यः प्रत्ययो निश्चयोऽर्थग्रहणं सोऽध्यवसाय इति। अध्यवसायश्च निश्चयाख्य इति विज्ञानभिक्षुः। (सां० प्र० भा अ० २ सू० १३)।

**अध्यास:**—उपचारः। आरोपः, यथा योद्धृगतौ जयपराजयौ राजन्युपचर्येते तथा प्रकृतौ वर्तमानं स्रष्टृत्वादिकं पुरुषेषूपचर्यते। अयमेवाध्यासः। यथा वा शुक्तौ रजतमारोप्य रजतमिति प्रत्ययः।

**अननुष्ठानलक्षणमप्रामाण्यम्**—यस्य वेदार्थस्यानुष्ठानमशक्यं भवति तत्प्रतिपादके वेदेऽननुष्ठानलक्षणमप्रामाण्यं भवतीति।

**अनादि:**—आदिरहितः। स द्विविधः—अखण्डानादिः प्रवाहानादिश्च। अखण्डानादिरात्मा:, प्रवाहानादिश्चाविवेकः। (द्र० सां० प्र० भा० अ० ६ सू० १२)।

**अनावृत्ति:**—अपवर्गः। "न स पुनरावर्तते" इति श्रुतेः।

**अनिर्वचनीयख्याति:**—सदसद्भ्यां विलक्षणमतएव सत्त्वेन असत्त्वेन वा निर्वचनानर्हम्, तादृशस्य जगतः ख्यातिरनिर्वचनीयख्यातिः। साऽपि न सांख्याभिमता, सदसद्भिन्नवस्त्वप्रसिद्धेः। दृष्टानुसारेणैव कल्पनाया औचित्यात्। (द्र० सां० प्र० भा० अ० ५ सू० ५४)।

**अनुमानम्**—व्याप्यदर्शनाद् व्यापकज्ञानम् (व्यापकाकारा चित्तवृत्तिः) अनुमानम्। अथवा लिङ्गलिङ्गिपूर्वकमनुमानम्। लिङ्गं व्याप्यं, लिङ्गि व्यापकम्। शङ्कितसमारोपितोपाधिनिराकरणेन वस्तुस्वभावप्रतिबद्धं

व्याप्यम्, येन प्रतिवद्धं तद्व्याकपम्। लिङ्गिपदमत्र द्विरावर्तनीयं, तेन च लिङ्गमस्यास्तीति पक्षधर्मताज्ञानमपि दर्शितं भवति तथा च व्याप्यव्यापक-भावपक्षधर्मताज्ञानपूर्वकमनुमानमितिवाचस्पतिमिश्राः। ( द्र० सां० त० कौ०, का० ५ )। गौडपादाचार्यास्तु लिङ्गपूर्वकं तदनुमानं, यत्र लिङ्गेन लिङ्गी अनुमीयते, यथा दण्डेन यतिः। लिङ्गिपूर्वकञ्च, यत्र लिङ्गिना लिङ्गमनुमीयते यथा दृष्ट्वा यतिमस्येदं त्रिदण्डमिति। ( द्र० गौ० पा० भा०, सां० का० ५ )। लिङ्गज्ञानाज्जायमाना साध्यविशिष्टपक्षाकाराऽन्तः-करणवृत्तिरिति भावागणेशः।

**अनुमितिः**—अनुमानजन्या या प्रमितिः पौरुषेयो बोध इति यावत्, सा अनुमितिः।

**अन्तःकरणम्**—बुद्धिरहङ्कारो मनश्चेति त्रयमप्यन्तःकरणम्।

**अन्यथाख्यातिः**—अन्यद्वस्तु अन्यरूपेण भासते, इयमेवान्यथाख्यातिः। सापि सांख्यैर्नाभ्युपेयते, स्ववचोव्याघातदोषात्। यतो हि शुक्तौ भासमानं रजतमन्यथाशब्देनोच्यते, तच्च रजतं नरशृङ्गतुल्यमसदस्ति। तथा च असच्च भासते चेति स्ववचोव्याघातः स्यात्। अतो नान्यथाख्यातिरपि स्वीकारार्हा। ( द्र० सां० प्र० भा० अ० ५ सू० ५५ )।

**अन्योन्यजननवृत्तयः**—गुणाः परस्परं जनयन्ति परिणमयन्तीति यावत्। स चात्र गुणानां परिणामः सदृशरूपः।

**अन्योन्यमिथुनवृत्तयः**—अन्योन्यसहचरा गुणाः भवन्ति, अविनाभाववृत्तय इति यावत्।

**अन्योन्याभिभववृत्तयः**—गुणा हि प्रयोजनवशात् स्वयमुद्भूय परस्परमभिभ-वन्ति। अतएवोद्भूतं सत्त्वं रजस्तमसी अभिभूय शान्तां वृत्तिं प्राप्नोति। एवं रजः सत्त्वतमसी अभिभूय घोराम् तमश्च सत्त्वरजसी अभिभूय निजां मूढां वृत्तिं प्रतिलभते।

**अन्योन्याश्रयवृत्तयः**—यथा त्रिदण्डी परस्पराश्रयेण घटधारणादिकार्यं कुरुते तथैव त्रयोगुणाः परस्पराश्रयेणैव प्रकाशप्रवृत्तिनियमनरूपाणि कार्याणि कुर्वन्तीति।

भवति चात्रागमः—

अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्र गामिनः।
रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः॥
तमसश्चापि मिथुने ते सत्त्वरजसी उभे।
उभयोः सत्त्वतमसोः मिथुनं तम उच्यते॥
नैषामादिः संप्रयोगो वियोगो वोपलभ्यते॥ इति।
(देवीभागवतम् ३-८)

**अपवर्गः**—द्वयोः प्रकृतिपुरुषयोरेकतरस्यात्मनो वा औदासीन्यमपवर्गः। प्रकृते-रौदासीन्यं विवेकिनं प्रत्यप्रवर्तनम्। पुरुषस्यौदासीन्यं प्रकृत्यनभिष्वङ्गः। (द्र० सां० सू० अनि० वृ० अ० ३ सू० ६५)।

**अपौरुषेयत्वम्**—दृष्टं वस्तु भवेददृष्टं वा, यस्मिन् वस्तुनि कृतमिति बुद्धि-रुपजायते तत् पौरुषेयम्। न तु पुरुषोच्चरितत्वं पौरुषेयत्वमितिसांख्याभि-मतम्। तथा सति वेदानामपि आदिपुरुषोच्चरितत्वेन पौरुषेयत्वापत्तिः स्यात्। (द्र० सां० प्र० भा० अ० ५ सू० ५०)।

**अबाह्यप्रत्यक्षम्**—ऐन्द्रियकप्रत्यक्षभिन्नं प्रत्यक्षम्।

**अभिचेष्टा**—सर्वो व्यापारः।

**अभिनिवेशः**—मरणादित्रासः, मा न भूवम् भूयासमित्येवरूपः।

**अभिमानः**—बुद्ध्युपादानकोऽहङ्कारः। अन्तःकरणरूपो द्रव्यविशेष इति विज्ञान-भिक्षुः। तदुक्तम्—अन्तःकरणमेकमेव बीजाङ्कुरमहावृक्षादिवत् अवस्थात्रय-मात्रभेदात् कार्यकारणभावमापद्यत इति। अत एव "मनोमहान् मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः" इत्यत्र मनोबुद्ध्योरेकपर्यायत्वमुक्तम्।

**अभिव्यक्तिः**—कारणे सतां घटपटादीनां ततः प्रादुर्भावो, यथा तिलेषु सतस्तै-लस्याविर्भावः।

**अमायिकत्वम्**—सत्यत्वम्, स्थिरत्वमकार्यत्वं वा । आत्मा सत्यत्वात् स्थिरत्वादकार्यत्वाच्चामायिकः । जाग्रत्पदार्थापेक्षया स्वाप्नपदार्था मायिकाः । आत्मापेक्षया तु जाग्रत्पदार्था अपि मायिका एव । ( द्र० सां० प्र० भा० अ० ३ सू० २६ ) ।

**अवयवाः**—प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवा न्यायस्य । ( द्र० सां० प्र० भा० अ० ५ सू० २७ ) । इति । तत्र साध्यनिर्देशः प्रतिज्ञा, यथा शब्दोऽनित्य इति । उदाहरसाधर्म्यात्साध्यसाधनं हेतुः, यथा उत्पत्तिधर्मकत्वादिति । उत्पत्तिधर्मकमनित्यं दृष्टमिति । तथा वैधर्म्यात्—उदाहरणवैधर्म्याच्च साध्यसाधनं हेतुरित्यर्थः । यथाऽनित्यः शब्दः उत्पत्तिधर्मकत्वात् अनुत्पत्तिधर्मकं नित्यं दृष्टं यथाऽऽत्मादि ।

साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम्, यथा उत्पत्तिमत्त्वेन हेतुना शब्दस्यानित्यत्वसाधने घटादिरुदाहरणं दीयते "घटादिवदिति" । अयमन्वयी दृष्टान्तः ।

व्यतिरेकेणापि दृष्टान्तो भवति । तथा च न्यायसूत्रम्—"तद्विपर्ययाद् वा विपरीतमिति" । अर्थात् साध्यवैधर्म्यादतद्धर्मभावी दृष्टान्तोऽपि उदाहरणम् । यथाऽनित्य शब्दः उत्पत्तिधर्मकत्वात्, यदुत्पत्तिधर्मकं न भवति, तन्नित्यं भवति यथा आत्मादीति । उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः । यथा उदाहरणे घटादिकमुत्पत्तिधर्मकत्वादनित्यं दृष्टं तथा शब्दोऽपि उत्पत्तिधर्मक इति वाक्यमुपनयः ।

हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम् । यथा, उत्पत्तिधर्मकत्वात् शब्दोऽनित्य इति वाक्यं निगमनम् । ( द्र० न्या० द० अ० १ आ० १ सू० ३३, ३४, ३५, ३६, ३७, ३८, ३९ ) । एतानि प्रतिज्ञादिलक्षणानि न्यायदर्शनवदेवात्रापि शास्त्रे सम्मतानि ।

**अविद्या**—विपर्ययभेदः । सा चानित्येषु नित्यख्यातिः, अशुचिषु शुचिख्यातिः, दुःखेषु सुखख्यातिः अनात्मसु आत्मख्यातिरिति । तथा च योगसूत्रम्—अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या (पा० २ सू० ५) ।

अविवेकः—अभेदाभिमानः। देहेन्द्रियादिषु आत्माभिमानः, आत्मनि वा देहेन्द्रियाद्यभेदाभिमानो देहादिधर्माभिमानश्चेति। अविवेकः विवेकप्रागभावो बुद्धिधर्म इति सां० प्र० भाष्यम् (अ० १ सू० ५५)।

अविशेषः—भूतसूक्ष्माणि, पञ्चतन्मात्राणि। नास्ति विशेषः शान्तघोरमूढत्वादिरूपो यत्र सोऽविशेष इति व्युत्पत्तेः। तन्मात्राण्यविशेषा इति सांख्यकारिका। (का० ३८)।

असत्ख्यातिः—अत्यन्तासतां ख्यातिरसत्ख्यातिः। सा च न सांख्याभिमता, नरशृङ्गादीनां ख्यातिरिव। (द्र० सां० प्र० भा० अ० ५ सू० ५१)।

अस्मिता—आत्मानात्मनोरेकताप्रत्ययः शरीराद्यतिरिक्त आत्मा नास्तीत्येवंरूपः। (द्र० सां० प्र० भा० अ० ३ सू० ३७)।

अशक्तिः—बुद्धिवधा अष्टाविंशतिभेदाः ते चैकादशेन्द्रियवधैः सह बुद्धेः सप्तदशभेदा वधाः। तत्र नवविधानां तुष्टीनामष्टविधानां सिद्धीनाञ्च विपर्ययाद् बुद्धेः स्वतः सप्तदशवधा भवन्ति। एकादशेन्द्रियाणामशक्तेः प्रयुक्ता अपि एकादशवधा बुद्धेर्भवन्ति। मिलित्वा चाष्टाविंशतिधा अशक्तिरस्ति। तथा चोक्तं सांख्यकारिकायाम्—"एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा। सप्तदशवधा बुद्धेर्विपर्ययात् तुष्टिसिद्धीनाम्" इति।

अहङ्कारः—अभिमानवृत्तिकः। अहमित्यभिमान एवाहङ्कारस्य सामान्यलक्षणम्। स च त्रिविधः—वैकृतः सत्त्वप्रधानः इन्द्रियाणां हेतुः। भूतादिस्तमःप्रधानः पञ्चतन्मात्राणां हेतुः। रजःप्रधानस्तैजस उभयहेतुः। तथा चोदाहृतं युक्तिदीपिकायाम्—एतस्माद्धि महत आत्मन इमे त्रय आत्मानः सृज्यन्ते वैकारिकतैजसभूतादयोऽहङ्कारलक्षणा इति।

अहिनिर्ल्वयिनीवत्—यथा सर्पो जीर्णां त्वचं हेयबुद्ध्याऽनायासेन परित्यजति, तथैव मुमुक्षुः प्रकृतिमनादिकालोपभुक्तां जीर्णां हेयबुद्ध्या त्यजेत्। (सां० प्र० भा० अ० ४ सू० ६)।

आतिवाहिकशरीरम्—लिङ्गशरीरातिरिक्तं भौतिकं सूक्ष्मं शरीरान्तरमाति-

वाहिकशरीरमिति विज्ञानभिक्षुः। लोकाल्लोकान्तरं लिङ्गदेहमतिवाहयतीत्यातिवाहिकम्। भूताश्रयतां विना चित्रादिवत् लिङ्गशरीरस्य गमनासंभवात्। लिङ्गशरीरन्तु भोगाश्रयतया पुरुषप्रतिविम्बाश्रयतया वा पृथगेवास्ति। तत्र प्रमाणञ्च—'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदयं सन्निविष्टः' 'अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलाद्यमः' इति श्रुतिस्मृती। (द्र० सां० प्र० भा० अ० ५ सू० १०३)।

आचार्योऽनिरुद्धस्तु-सूक्ष्मशरीरमेवातिवाहिकं न शरीरान्तरमित्याह। (द्र० सां० सू० अनि० वृ० अ० ५ सू० १०३)।

आत्मद्वैतम्—आत्मनां भोग्यप्रपञ्चेन परस्परञ्चात्यन्ताभेदरूपमद्वैतमिति वेदान्तिनः। तत्सांख्यानां नाभिमतम्। अजामेकामितिवाक्यगतैः प्रकृतित्यागात्यागादिलिङ्गैर्भेदस्यैव सिद्धेः। यान्यपि अभेदवाक्यानि दृश्यन्ते तानि 'निरञ्जनः साम्यमुपैति' इत्यादिसाम्यप्रतिपादकश्रुत्येकवाक्यतया साम्यबोधकानि। आत्मनां परस्परं भेदस्तु जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्त्यादेश्च सिद्धः। अभेदश्रुतिश्च जातिपरेति। भेदग्राहकप्रत्यक्षबाधादपि नात्माद्वैतम्। (द्र० सां० प्र० भा० अ० ५ सू० ६१-६२)।

आत्मानिरवयवः—'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' इति प्रामाण्यादात्मा निरवयवः। 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्। तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्' इत्यादिश्रुतिस्तु आकाशजलयोरिव अविभागमात्रेणांशांशिभावं बोधयति न तु सावयवत्वेन। (द्र० सां० प्र० भा० अ० ५ सू० ७३)।

आत्मास्ति—जानामित्येवंप्रतीतिविषयः पुरुषः सामान्यतः सिद्ध एव। स च देहादिव्यतिरिक्तोऽस्ति, परिणामित्वापरिणामित्वादिवैधर्म्यात्। प्रकृत्यादयस्तावत् प्रत्यक्षानुमानागमैः परिणामिनः सिद्धाः। पुरुषस्तु अपरिणामी सदाज्ञातविषयत्वादनुमीयते। तथाहि, यथा सन्निकर्षसाम्येऽपि चक्षुषो रूपमेव विषयो न रसादिस्तद्वत् पुरुषस्य स्वबुद्धिवृत्तिरेव विषयो न तु सन्निकर्षसाम्येऽपि अन्यद्वस्तु इति फलबलात् कल्प्यते। बुद्धिवृत्त्यारूढतयैव

त्वन्यद्भोग्यं भवति न स्वतः, सर्वदा सर्वभानापत्तेः। ताश्च बुद्धिवृत्तयो नाज्ञातास्तिष्ठन्ति, ज्ञानसुखेच्छादीनामज्ञातसत्तास्वीकारे तेष्वपि घटादिष्विव संशयादिप्रसङ्गात्'अहं जानामि न वा सुखी न वा' इत्यादिरूपेण। अतस्तेषां सदा ज्ञातत्वात् तद्द्रष्टा चेतनोऽपरिणामीत्यायातम्। चेतनस्य परिणामित्वे कदाचिदान्ध्यपरिणामेन सत्या अपि बुद्धिवृत्तेः दर्शनाभावेन संशयाद्यापत्तेरिति। ममेदं शरीरं ममेयं बुद्धिरितिषष्ठीव्यपदेशादपि देहादिभ्यो भिन्न आत्मास्तीति सिद्धम्। ( द्र० सां० प्र० भा० अ० ६ सू० २३ )।

आधिदैविकम्—देवान् = अग्निवाय्वादीन् अधिकृत्य प्रवृत्तम् आधिदैविकम् दुःखम्।

आधिभौतिकम्—भूतानि = मानुषपशुपक्ष्यादीनि अधिकृत्य प्रवृत्तम् आधिभौतिकम् दुःखम्।

आध्यात्मिकम्—आत्मानम् = अध्यस्तात्मभावं शरीरं मनश्चाधिकृत्य प्रवृत्तम् आध्यात्मिकं दुःखम्।

आनुमानिकम्-अनुमानात् सिद्धम् = प्रकृत्यादिकम्।

आनुश्रविकः—वैदिकः कर्मकलापः। गुरुपाठादनु श्रूयते इत्यनुश्रवो वेदः। एतदुक्तं भवति—श्रूयते एव परं न केनापि क्रियत इति। तत्र ( अनुश्रवे-वेदे ) भव आनुश्रविकः तत्र प्राप्तो ज्ञात इति यावत्। ( द्र० सां० त० कौ० का० २ )।

आविर्भावः—कारणव्यापारादूर्ध्वमिव पूर्वमपि सतः प्रादुर्भावः, प्राकट्यम्। यथा तिलेषु सतस्तैलस्य, सौरभेयीषु सतो दुग्धस्य प्राकट्यम्।

आसनम्—यत् स्थिरं सत् सुखसाधनं भवति स्वस्तिकादिकं तदासनम्। तथा च सूत्रम्—'स्थिरसुखमासनम्' इति। ( सां० सू० अ० ३ सू० ३४ )।

आसुरिः—कपिलशिष्यः। तत्र प्रमाणम्—"एतत्पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ" इति ( सां० का० ७० )।

**इन्द्रियम्**—सात्त्विकाहङ्कारोपादानकत्वमिन्द्रियत्वम् । तत्र पञ्च ज्ञानेन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनत्वगाख्यानि, पञ्च कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थाख्यानि । उभयात्मकं मनश्चेत्येकादशेन्द्रियाणि । इन्द्रियाणि चातोन्द्रियाणि भवन्ति, भ्रान्तानान्तु अधिष्ठानभूतगोलकादाविन्द्रियज्ञानम् । यदि गोलकादिकमेवेन्द्रियं स्यात् तदा छिन्नकर्णस्य श्रवणानुपपत्तिः पाटलचक्षुषोऽपि रूपग्रहणप्रसङ्गः । पुनश्च शक्तिभेदादिन्द्रियाणि नाना भवन्ति, न तु एकमिन्द्रियमिति ।

**इन्द्रियाभौतिकत्वम्**—सांख्यमते इन्द्रियाणामहङ्कारतत्त्वादुत्पत्तेराहङ्कारिकत्वमस्ति न तु भौतिकत्वम् । अतो भौतिकानीन्द्रियाणीति न्यायमतमपास्तं भवति । तथा च सांख्यसूत्रम्—'न भूतप्रकृतित्वमिन्द्रियाणामाहङ्कारिकत्वश्रुतेः' इति । ( अ० ५ सू० ८४ ) । श्रुतिश्च—'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी' इति ।

**इषुकारवत्**—यथा शरनिर्माणे एकचित्तस्येषुकारस्य पार्श्वे राज्ञो गमनेनापि एकाग्रता न हीयते, तथैव एकाग्रचित्तस्य योगिनः समाधिहानिर्न भवतीति । ( सां० प्र० भा० अ० ४ सू० १४ ) ।

**ईश्वरः**—जगत्स्रष्टृत्वेनाभ्युपगतो न्यायादिसम्मतः । अत्र केचित्-सांख्यमते ईश्वरो नास्ति, अतो निरीश्वरं सांख्यदर्शनमिति । अतएव सांख्यसूत्राणि—"ईश्वरासिद्धेः, मुक्तबद्धयोरन्यतराभावान्न तत्सिद्धिः, उभयथाप्यसत्करत्वम्, मुक्तात्मनः प्रशंसा उपासासिद्धस्य वा" इति ( अ० १ सू० ९२, ९३, ९४, ९५ । ) ।

अयमभिप्रायः—प्रत्यक्षलक्षणनिरूपणप्रसङ्गे योगिनामबाह्यप्रत्यक्षे आपादितां लक्षणाव्याप्तिशङ्कां 'योगिनामबाह्यप्रत्यक्षत्वान्न दोषः, लीनवस्तुलब्धातिशयसम्बन्धाद् वाऽदोषः' इति सूत्राभ्यां समाधाय पुनरीश्वरप्रत्यक्षेऽपि तामेव लक्षणाव्याप्तिशङ्काम् ईश्वरासिद्धिप्रतिपादनमुखेन निराकरोति 'ईश्वरासिद्धे' रित्यादिसूत्रचतुष्टयेन । अर्थात् ईश्वर एव नास्ति, कुतस्तत्प्रत्यक्षे लक्षणा-

व्याप्तिशङ्कातत्परिहारायासचिन्तेति। इयमेव व्याख्या अनिरुद्धप्रभृतीनां व्याख्यातॄणाम्।

विज्ञानभिक्षवस्तु विवेचयन्ति–नैभिः सूत्रैरीश्वरखण्डने सूत्रकाराभिप्रायः। यद्येवं स्यात् तदा 'ईश्वराभावात्' इत्येवं सूत्रयेत् न तु 'ईश्वरासिद्धेः' इत्याकारं सूत्रं रचयेत्। तथा च जगत्स्रष्टृत्वेनेश्वरो न सिध्यति, प्रकृतेरेव सृष्टिकर्तृत्वात्। ईश्वरे तु प्रकृत्यधिष्ठातृत्वमात्रमस्ति। उपपादितञ्चैतत् सविस्तरं ब्रह्मसूत्रविज्ञानामृतभाष्ये। सांख्यप्रवचनभाष्येऽपि 'तत्सन्निधानादधिष्ठातृत्वं मणिवत्' इति सूत्रभाष्ये स्पष्टीकृतञ्चैतत्। अतः सङ्कल्पपूर्वकजगत्सृष्टिकर्तृत्वनिषेधपरतयैवोक्तसूत्रचतुष्टयं व्याख्यातं तैः। यद्यपि योगिप्रत्यक्षसमाधानेनैवेश्वरप्रत्यक्षेऽपि लक्षणाव्याप्तिशङ्कायाः समाधानं जायते तथापि स्मृतत्वे सत्युपेक्षानर्हत्वरूपप्रसङ्गसङ्गतेः प्रसङ्गादेवेश्वरे जगत्स्रष्टृत्वनिषेधः सांख्याभिप्रेत इहोपक्षिप्त इति तेषामभिप्रायः।

वृत्तिकारप्रभृतीनामयमभिप्रायः–ईश्वरसत्तानिषेध एवैषां सूत्राणां तात्पर्यम्। अन्यथा ईश्वरोऽस्तीतिवास्तविको यदि सांख्यसम्प्रदायस्तदा योगिप्रत्यक्षसमाधानेनैवेश्वरप्रत्यक्षीयशङ्काया अपि समाधानं जायत एवेति निष्प्रयोजनानि अप्रासङ्गिकानि चैतानि सूत्राणि भवेयुः। यतो नायं जगत्सृष्टिकर्तृत्वप्रसङ्गोऽपि तु प्रत्यक्षलक्षणप्रसङ्ग एवेति। विज्ञानभिक्षुरपि तृतीयाध्याये 'ईदृशेश्वरसिद्धिः सिद्धा' इति सूत्रभाष्ये प्रकृतिलीनस्य जन्येश्वरस्य सिद्धिमाचक्षाणो नित्येश्वरस्य विवादास्पदत्वमुरीचकार।

एवं माठरवृत्तिकारोऽप्याह—ईश्वरः कारणं न भवति कस्मात्? निर्गुणत्वात्। इमाः सगुणाः प्रजाः, सत्त्वंरजस्तमस्त्रयो गुणाः। ते च प्रजासु सन्ति। तांश्च गुणान् दृष्ट्वा साधयामः–प्रकृतेरिमाः समुत्पन्नाः प्रजाः। यदीश्वरः कारण स्यात् निर्गुणादीश्वरान्निर्गुणा एव प्रजाः स्युः। नचैवम् तस्मादीश्वरः कारणं न भवतीति। (मा० वृ० सां० का० ६१)।

वस्तुतस्तु द्वयी हि सांख्यविचारधारा प्रवहमानाऽस्ति, सेश्वरसांख्यधारा निरीश्वरसांख्यधारा चेति। एतच्च विज्ञानभिक्षुरपि स्वीकरोति। अतः

एवोक्तं तेन सांख्यप्रवचनभाष्ये—'अयं चेश्वरप्रतिषेधः एकदेशिनानां प्रौढिवादेनेति। यथा एकस्मिन्नेव बौद्धदर्शने धाराचतुष्टयी प्रसिद्धा, एकस्मिन्नेव गौतमीये दर्शने नव्यप्राच्यधाराद्वयी, एकस्मिन्नेव च वैयासके दर्शने नैकानि प्रस्थानानि सन्तीति। इत्थं सत्यपि सांख्यस्य सेश्वरनिरीश्वरेतिधाराद्वये सेश्वरधारैव मनोरमतामञ्चति। क्वचिद् दृश्यमानोऽपि निषेधस्तत्कर्तृत्वप्रतियोगिकएव न तु ईश्वरस्वरूपप्रतियोगिक इति मन्तुमुचितम्।

तथाहि—परवशा प्रकृतिः कर्त्री 'अकार्यत्वेऽपि तद्योगः पारवश्यात्' इति सूत्रप्रामाण्यात् सिध्यति। स च परः आत्मैव न न्यायाभिमत ईश्वरः। अर्थात् प्रकृतिप्रतिबिम्बितत्वाद् आत्मनि सर्ववित्त्वसर्वकर्तृत्वाभिमानो न तु वास्तविकः। तथा च सूत्रम्—'स हि सर्ववित् सर्वकर्ता' इति। अत्र सूत्रे 'सहि' इत्यस्य 'प्रकृतिरेव' इत्यर्थः कृतो वृत्तिसारकारेण। यद्यस्मदभिमत उक्ताभिमानवानात्माऽस्ति तदा भवतु स ईश्वरः। किन्तु न्यायाभिमते ईश्वरे तु प्रमाणं नास्ति। अर्थात् सांख्याः कर्तारमेवेश्वरं निषेधन्ति न तु कर्तृत्वाद्यभिमानिनमात्मानमीश्वरमिति। अत एव हि वृत्तिकृता 'विमुक्तविमोक्षार्थं स्वार्थं वा प्रधानस्य' इति सूत्रवृत्तौ आत्मनो द्वैविध्यं प्रतिपादितं परश्चापरश्चेति। ( द्र० सा० सू० अ० वृ० अ० ३ सू० ५७ )।

**उपादानकारणम्**—जगदुपादानं न केवल आत्मा, नाऽप्यात्माश्रिताऽविद्या, नापि कपालद्वयवद् आत्मा चाविद्या चेत्युभयं समुच्चितं जगदुपादानम् सम्भवति, आत्मनोऽसङ्गत्वात्। सङ्गाख्यो हि यः संयोगविशेषस्तेनैव द्रव्याणां विकारो भवति। अतोऽसङ्गत्वात् केवलस्यात्मनोऽद्वितीयस्य नोपादानत्वम्। नाऽविद्याद्वाराऽपि, असङ्गत्वेनैवाविद्यायोगस्यापि निरस्तत्वात्। प्रत्येकोपादनत्ववदेव समुच्चितोपादानत्वमपि असङ्गत्वादेवासंभवि। ( द्र० सां० प्र० भा० अ० ५ सू० ६५ )।

**उपादानयोग्यता**—गुणवत्त्वं सङ्गित्वं चोपादानयोग्यता। तयोरभावात् नित्यत्वेऽपि पुरुषस्य नोपादानत्वम्। महदादयस्तु स्वयं कार्यरूपा अतो तेऽपि न जगदुपादानम्। तस्मात् प्रकृतिरेव जगदुपादानम्। सां० प्र० भा० अ० ६ सू० ३२, ३३ )।

**उपास्यासिद्धिवत्**—यथा उपास्यभूतानां ब्रह्मादीनां सिद्धिसत्त्वेऽपि कृतकृत्यता नास्ति, तेषामपि योगनिद्रादौ योगाभ्यासश्रवणात्। तथैव ऐश्वर्ययोगेऽपि कृतकृत्यता नास्ति, क्षयातिशयदुःखैरनुगतत्वात्। ( द्र० सां० प्र० भा० अ० ४ सू० ३२ )।

**उभयेन्द्रियं**—मनः। ज्ञानेन्द्रियाणां कर्मेन्द्रियाणाञ्च प्रवर्तकत्वात्।

**उष्ट्रकुङ्कुमवहनवत्**—यथोष्ट्रस्य कुङ्कुमवहनं स्वाम्यर्थं तथैव प्रधानकर्तृका सृष्टिरपि परार्थैव ( पुरुषार्थैव ) भवतीति।

**ऐकभौतिकः**—पार्थिवमेव शरीरमस्ति, अन्यानि च भूतानि उपष्टम्भकमात्राणीति अपरे मन्यन्ते। अन्येषां भूतानामुपष्टम्भकत्वमात्रेण शरीरस्य पाञ्चभौतिकत्वव्यपदेशः। अयमेव सिद्धान्तपक्षः। तथा च सांख्यसूत्रम्—'न पाञ्चभौतिकं शरीरम्' इति। ( अ० ५ सू० १०२ )।

**ऐश्वर्यम्**—बुद्धिधर्मः यतोऽणिमादिप्रादुर्भावो भवति।

**औदासीन्यम्**—अकर्तृत्वम्—माध्यस्थ्यम्।

**कपिलः**—सांख्यशास्त्रप्रवर्तकः तदुक्तम्—'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानञ्च पश्येत्' श्वेताश्वतरोपनिषत्—अ० ५ म० २। 'सांख्यस्य वक्ता कपिलः परमर्षिः स उच्यते' महाभा० ३३७।६०। 'पञ्चमः कपिलोनाम सिद्धेशः कालविप्लुतम्। प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम्' श्रीमद्भागवतम्—स्क० १ अ० १ श्लो० १८।

कपिलो ब्रह्मसुतः 'इति सां० का० गौडपादभाष्यम्। विष्णोरवतारः स्वायम्भुवस्य मनोः दुहितरि देवहूत्यां महर्षेः कर्दमाज्जात इति श्रीमद्भागवतम्—यथा तस्यां बहुतिथे काले भगवान् मधुसूदनः। कार्दमं वीर्यमापन्नो जज्ञेऽग्निरिव दारुणि॥ अयं सिद्धगणाधीशः सांख्याचार्यैः सुसम्मतः लोके कपिल इत्याख्यां गन्ता ते कीर्तिवर्धनः॥ स्क-३-अ-२४ श्लोक ६-१९।

अग्न्यवतार इति महाभारतम्—यथा—"कपिलं परमर्षिञ्च यं प्राहुर्यतयः सदा। अग्निः स कपिलो नाम सांख्ययोगप्रवर्तकः॥ ( वनपर्व अ० २११

श्लोक २१ )। किन्त्वेतावता कपिलद्वैविध्यं त्रैविध्यं वास्तीति स्वीकारो भ्रम एवेति श्रीमदुदयवीरशास्त्रिणः ( द्र० सांख्यदर्शनका इतिहास पृ० ८-१२ )। एतदनुसारं महाभारतमतेनापि सांख्यप्रवर्तकः कपिलो विष्णोरवतार एव किन्तु स क्रोधाग्निना सगरपुत्रान् भस्मीचकारेति तस्याग्नित्वं प्रसिद्धमभूत् इति। विज्ञानभिक्षुरपि कपिलद्वैविध्यं निराकरोति। ( द्र० सां० प्र० भा० अ० ६ सू० ७० )।

**करणम्**—त्रयोदशविधम्। अन्तःकरणं त्रिविधं बुद्ध्यहङ्कारमनोरूपम्। दशधा च बाह्यं ज्ञानेन्द्रियकर्मेन्द्रियरूपम्।

**करणकार्यम्**—आहार्यम् ( व्याप्यम् ) धार्यम् = धारयितव्यम् प्रकाश्यम् = प्रकाशयितव्यञ्चेति। यथा कर्मेन्द्रियाणां वचनादानविहरणोत्सर्गानन्दा यथायथं व्याप्या भवन्ति। अन्तःकरणत्रयस्य प्राणादिलक्षणया वृत्त्या शरीरं धार्यं भवति। एवं बुद्धीन्द्रियाणां शब्दस्पर्शरूपरसगन्धाः प्रकाश्या भवन्ति। ( द्र० सां० त० कौ० का० ३२ )।

**कर्तृत्वभोक्तृत्वयोर्वैयधिकरण्यम्**—अभिमानवृत्तिकमन्तःकरणमहङ्कारः, स एव कृतिमान्। प्रायशोऽभिमानोत्तरमेव प्रवृत्तिदर्शनात्। न तु पुरुषः कृतिमान् अपरिणामित्वात्। एवमहङ्कारस्य कर्तृत्वेऽपि भोगश्चित्येव पर्यवसन्नो भवति। न चान्यनिष्ठकर्मणाऽन्यस्य भोगे पुरुषविशेषस्यापि नियमो न स्यादिति वाच्यम् अहङ्कारेणासञ्जितं तस्याश्चितो यत् कर्मतज्जन्यत्वात्तदीयभोगस्य। तथा च योऽहङ्कारो यं पुरुषमादायाचेतने वस्तुनि 'अहमिति, ममेति' 'च वृत्तिं' करोति, तस्याहङ्कारस्य कर्म तस्यात्मन उच्यते। तेनैव च कर्मणा तत्रात्मनि भोगोऽर्ज्यते इति भोगे न पुरुषविशेषनियमानुपपत्तिः। ( द्र० सां० प्र० भा० अ० ६ सू० ५४-५५)।

**कर्मेन्द्रियाणि**—वाक्पाणिपादपायूपस्थानि पञ्च।

**काम्यम्**—फलाभिसन्धिना कृतं कर्म।

**कालः**—द्विविधो, नित्यः खण्डरूपश्च। तत्र नित्यः कालः प्रकृतेर्गुणविशेष एव,

खण्डस्तु तत्तदुपाधिसंयोगादाकाशादुत्पद्यते। (द्र० सां० प्र० भा० अ० २ सू० १२)।

कालादिकर्मवत्—यथैको गच्छति ऋतुरितरश्च प्रवर्तते इत्यादिरूपं कालादिकर्म स्वत एव भवत्येवमेव प्रधानस्यापि स्वत एव चेष्टा भविष्यतीति।

कुमारीशङ्खवत्—यथा कुमारीहस्तचूलिकानामन्योन्यसङ्गेन झणत्कारो भवति, तथैव बहुभिः सङ्गे रागद्वेषाद्युत्पत्त्या कलहो भवति अतो बहुभिः सङ्गो न कार्यः। (सां० प्र० भा० अ० ४ सू० ९)।

कुलवधूवत्—यथा स्वामिना मे दोषो दृष्ट इत्यवधारणेन लज्जिता कुलवधूर्न स्वामिनमुपसर्पति, तद्वत् प्रकृतिरपि पुरुषेण निजपरिणामित्वदुःखात्मकत्वादि-दोषदर्शनाद् लज्जिता भवति, पुनश्च नोपसर्पति पुरुषम्।

केवलज्ञानम्—विपर्ययदोषरहितत्वेन विशुद्धं ज्ञानम्। तस्य स्वरूपम्–'नास्मि, न मे, नाहम्' इत्यस्ति। तत्र प्रथमेन आत्मनः कर्तृत्वनिषेधः, द्वितीयेन सङ्ग-निषेधः, तृतीयेन च तादात्म्यनिषेधः क्रियते।

कैवल्यम्—आत्यन्तिको दुःखत्रयाभावः कैवल्यम्।

कोशकारवत्—यथा कोशकारः कीटविशेषः स्वनिर्मितेनावासेन आत्मानं बध्नाति, तथैव प्रकृतिरपि धर्माधर्मवैराग्यावैराग्यैश्वर्यानैश्वर्याज्ञानैः सप्त-रूपैर्दुःखहेतुभिरात्मानं बध्नाति। पुनश्च ज्ञानात्मकेनैकरूपेणात्मानं दुःखान्मोचयति।

क्षीरवत्—यथा क्षीरं पुरुषप्रयत्ननैरपेक्ष्येण स्वयमेव दधिरूपेण परिणमते, एवमचेतनस्यापि परप्रयत्नं विनाऽपि महदादिरूपः परिणामः प्रधानस्य भवतीति।

गुणाः—सत्त्वरजस्तमांसि।

सत्त्वम्–लघु प्रकाशकम् प्रीत्यात्मकञ्च भवति। तत्र लघुत्वं गौरवप्रतिद्वन्द्वि यतश्च वह्नेरूर्ध्वज्वलनं वायोस्तिर्यग्गमनमिन्द्रियाणां स्ववृत्तिपाटवञ्च भवतीति। प्रकाशकमपि सत्त्वमस्ति यत इन्द्रियाणि वस्तु प्रकाशयन्तीति।

रजः—दुःखात्मकं, चलम् सत्त्वतमसोरुपष्टम्भकम् ( उत्तेजकम् ) अतएव प्रवृत्तिकारकं भवति ।

तमः—मोहात्मकं गुरु, आवरकञ्च भवति । अत एव नियामकमपि सर्ववस्तूनां भवति ।

चक्रभ्रमणवत्—यथा कुलालकर्मनिवृत्तावपि पूर्वकर्मवेगात् स्वयमेव कियत्कालं चक्रं भ्रमति, एवं ज्ञानोत्तरं कर्मानुत्पत्तावपि प्रारब्धकर्मवेगेन चेष्टमानं देहं धृत्वा जीवन्मुक्तस्तिष्ठति । ( द्र० सां० प्र० भा० अ० ३ सू० ८२ ) ।

चातुर्भौतिकः—आकाशस्यानारम्भकत्वमित्यभिप्रेत्याकाशं विना चतुर्णामेव भूतानां परिणामो देह इति केचित् ।

चिच्छायापत्तिः—दर्पणे मुखप्रतिबिम्बवत् बुद्धौ यश्चैतन्यप्रतिबिम्बः चैतन्यदर्शनार्थं कल्प्यते, स एव चिच्छायापत्तिरिति, चैतन्याध्यास इति चिदावेश इति चोच्यते । ( द्र० सां० प्र० भा० अ० १ सू० ९९ ) ।

चित्तम्—बुद्धिर्महत्तत्त्वं वा ।

चिद्रूपआत्मा—आत्मा चिद्रूप एव न त्वानन्दचैतन्योभयरूपः । एकस्य धर्मिण आनन्दचैतन्योभयरूपत्वाभावात् । दुःखज्ञानकाले सुखाननुभवेन ज्ञानसुखयोर्भेदात् । न च ज्ञानस्यैवावान्तरविशेषः सुखमिति वक्तुं शक्यम् आत्मस्वरूपज्ञानस्याखण्डत्वात् । न च 'सत्यं विज्ञानमानन्दं ब्रह्म' इति श्रुतिबलादेवात्मनश्चिदानन्दोभयरूपत्वमस्तीति वाच्यम् 'नानन्दं न निरानन्दम्' इत्यादिश्रुत्या 'अदुःखमसुखं ब्रह्म भूतभव्यभवात्मकम्' इत्यादिस्मृत्या च आनन्दाभावस्यापि प्रतिपादितत्वेन तर्कस्यैवात्रादरणीयत्वात् । तर्कस्य चात्मनश्चिदानन्दोभयरूपत्वप्रतिरोधित्वात् । आनन्दरूपताश्रुतिश्च दुःखनिवृत्तिपरतया गौणी । अतश्चिद्रूप एवात्मा ( द्र० सां० प्र० भा० अ० ५ सू० ६६-६७ ) ।

छिन्नहस्तवत्—यथा छिन्नं हस्तं पुनः कोऽपि न गृह्णाति तथैव विवेकेन त्यक्तमिदं देहेन्द्रियादिकं पुनर्नाभिमन्येत । ( सां० प्र० भा० अ० ४ सू० ७ ) ।

जगत्सत्यत्वम्—लोके हि निद्रादिदोषदुष्टान्तःकरणादिजन्यत्वेन स्वाप्नविषय-शङ्खपीतिमादीनामसत्यत्वं दृष्टम्। महदादिप्रपञ्चकारणीभूतायाः प्रकृते-र्हिरण्यगर्भस्य च बुद्धेरदुष्टत्वात् महदादिप्रपञ्चस्य नासत्यत्वम्।

न च 'नेह नानास्ति किञ्चन' इत्यादिश्रुत्या बाधितत्वेन अविद्यादिरूपः कश्चनानादिर्दोषः कल्पनीय इति वाच्यम् नेह नानेति श्रुतेः प्रकरणानु-सारेण विभागादिप्रतिषेधकत्वात् न प्रपञ्चात्यन्ततुच्छतापरत्वमस्ति। अन्यथा स्वस्या अपि बाधापत्त्या स्वार्थासाधकत्वप्रसङ्गात्। न हि स्वप्नका-लीनशब्दस्य बाधे तज्ज्ञापितार्थोऽपि न सन्दिह्यत इति। अतो नेहनानेति श्रुतेः ब्रह्मविभक्तं किमपि नास्तीत्यर्थः। सर्वं समाप्नोषि ततोऽसि सर्वं' इति स्मृतिरपि एतमेवार्थं गमयति। 'न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः। न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता' इत्यादिश्रुतेः आत्माति-रिक्तस्य कूटस्थनित्यतारूपातिपरमार्थसत्ताविरहोऽर्थः। तथा आत्मनो निरोधादिर्नास्तीत्येवार्थः। अन्यथैतादृशज्ञानस्य मोक्षफलकत्वप्रतिपादन-विरोधात् (द्र० सां० प्र० भा० अ० ६ सू० ५२)।

जन्म—लिङ्गशरीरस्य स्थूलदेहसञ्चार एव जन्म।

जीवः—अन्तःकरणोपलक्षित आत्मा जीवः।

जीवन्मुक्तः—मध्यविवेकावस्थ एव जीवन्मुक्तो भवति। उक्तञ्च—

पूर्वाभ्यासबलात् कार्ये न लोको न च वैदिकः।
अपुण्यपापः सर्वात्मा जीवन्मुक्तः स उच्यते॥ इति।

ज्ञानम्—संख्या, विवेकज्ञानम् मुक्तिहेतुभूतम्।

ज्ञानेन्द्रियाणि—चक्षुःश्रोत्रत्वग्रसनघ्राणाख्यानि पञ्च।

तुष्टिः—नवप्रकारा। तत्राध्यात्मिक्यश्चतस्रः तुष्टयः प्रकृत्युपादानकालभाग्य-संज्ञकाः। तत्रापि विवेकसाक्षात्कारोऽपि प्रकृतिपरिणाम एवेत्यलं ध्याना-भ्यासेनेत्येवं दृष्ट्या या ध्यानादिनिवृत्तौ तुष्टिः सा प्रकृत्याख्या तुष्टिः।

इयमेव 'अम्भः' इत्युच्यते। प्रव्रज्योपादानेनैव मोक्षो भविष्यति, किं ध्यानादिनेति या तुष्टिः, सा उपादानाख्या। अस्या एव तान्त्रिकी संज्ञा 'सलिलम्' इत्यस्ति। कृतसंन्यासस्यापि कालेनैव मोक्षो भविष्यति, अलमुद्वेगेनेति या तुष्टिः सा कालाख्या 'ओघो मेघो' वोच्यते। एवं भाग्यादेव मोक्षो भविष्यति न मोक्षशास्त्रोक्तसाधनैरित्येवं कुतर्के या तुष्टिःसा भाग्याख्या 'वृष्टिरित्युच्यते।

बाह्याश्च तुष्टयः पञ्च भवन्ति। ता बाह्येषु शब्दादिपञ्चविषयेषु अर्जन-रक्षणक्षयभोगहिंसादिदोषदर्शननिमित्तकोपरमाज्जायन्ते। आसां क्रमशस्ता-न्त्रिक्य: संज्ञाः—पारं, सुपारं, पारपारम्, अनुत्तमाम्भः, उत्तमाम्भ इति सन्ति। एवं मिलिताः सर्वास्तुष्टयो नव भवन्ति। ( द्र० सां० त० कौ० सां० का० ५० )।

तैजसः—राजसः ( अहङ्कारः )।

दिक्—दिक् द्विविधा नित्या खण्डरूपा च। तत्र नित्या प्रकृतेर्गुणविशेष एव। खण्डरूपा तु तत्तदुपाधिसंयोगाद् आकाशादुत्पद्यते। ( द्र० सां० प्र० भा० अ० २ सू० १२ )।

दृष्टः—दृष्टोपायो दुःखविगमस्य। औषधसेवनमनोज्ञस्त्रीपानभोजनविलेपन-वस्त्रालङ्कारादिसम्प्राप्तिनीतिशास्त्राभ्यासकुशलतानिरत्ययस्थानाध्यसनादि-मणिमन्त्राद्युपयोगाः त्रिविधदुःखनिवृत्तेर्दृष्टोपायाः।

दुःखनिवृत्तिरेव पुरुषार्थः—यथा पुरुषस्य दुःखे बलवत्तरो द्वेषो न तथा सुखे बलवत्तरोऽभिलाषोऽपितु तदपेक्षया दुर्बलः। तथा च सुखाभिलाषं बाधित्वाऽपि दुःखद्वेषो दुःखनिवृत्तावेवेच्छां जनयतीति। सुखापेक्षया दुःखस्य बाहुल्यादपि दुःखनिवृत्तिरेव पुरुषार्थ इति सिध्यति। ( द्र० सां० प्र० भा० अ० ६ सू० ६७ )।

देहचातुर्विध्यम्—देहाश्चतुर्विधाः—कर्मदेहः, उपभोगदेहः, उभयदेहः, विरक्त-देहश्चेति। तत्र वीतरागाणां फलसंन्यासेन कर्मकरणात् कर्मदेहः।

पश्वादीनामुपभोगदेहः। भोगिनां कर्माधिकारिणां राजर्षिप्रभृतीनां कर्मोपभोगदेहः। विरक्तानां दत्तात्रेयजडभरतादीनामनधिकारिदेहश्चेति।

द्वेषः—दुःखानुशयी। दुःखमनुशेते इति व्युत्पत्त्या दुःखानन्तरं जायमानः।

धर्मः—निरतिशयसत्त्वात्मिकाया बुद्धेः कार्यभूतः।

धारणा—प्राणस्य पूरकरेचककुम्भकैर्यो निरोधो वशीकरणं सा। तथा च सांख्यसूत्रम्—"निरोधश्छर्दिविधारणाभ्याम्" (सां० द० अ० ३ सू० ३३)।

ध्यानम्—विषयोपरागस्योपघातकं ध्यानम्। तथा च सांख्यसूत्रम्—'रागोपहतिर्ध्यानम्' (अ० ३ सू० ३०)।

ध्वान्तम्—ध्वान्तं तमः। तच्च नालोकप्रागभावो, नापि आलोकध्वंसः, आलोकात्यन्ताभाव, आलोकान्योन्याभावो वा किन्त्वभावाद् भिन्नं वस्तुभूतम्। तदपि गुणो वा भवतु द्रव्यं वेत्यत्र न सांख्यानां सिद्धान्तक्षतिः। अनियतपदार्थवादित्वात् सांख्यानाम्। विज्ञानभिक्षुस्तु नानियतपदार्थवादः सांख्याभ्युपगत इत्याह। (द्र० सां० प्र० भा० अ० १ सू० ६१)।

नर्तकीवत्—यथा परिषद्भ्यो नृत्यदर्शनार्थं प्रवृत्ता नर्तकी नृत्ये सम्पन्ने ततो निवर्तते, तथैव पुरुषार्थाधिगतिरूपप्रयोजने चरितार्थे सति प्रधानमपि निवर्तते। (द्र० सां० प्र० भा० अ० ५ सू० ६९)।

नाशः—कारणे लयस्तिरोभाव इति यावत्। तथाच सांख्यसूत्रम्—'नाशः कारणलयः' इति। (अ० १ सू० १२१)।

निजमुक्तः—स्वभावतो मुक्तः।

निःसङ्गः—अधिकारहेतुभूतो यः संयोगस्तद्रहितः। एतेन विभुत्वेन सामान्यसंयोगसत्त्वेऽपि पुरुषे न निःसङ्गत्वहानिः, अधिकारहेतुभूतस्य संयोगस्याभावात्।

नित्यबुद्धः—चित्स्वभावः नित्यचैतन्य इति यावत्।

**नित्यबुद्ध्याद्यभावः**—नित्या ज्ञानेच्छाकृतयो न भवन्ति सांख्यमते। अत एव नित्यबुद्ध्यादीनामाश्रयोऽपि कश्चिदीश्वरो नास्ति। ( द्र० सां० सू० अनि० वृ० अ० ५ सू० १२७-१२८ तथा तत्रत्यं सां० प्र० भा० )।

**नित्यमुक्तः**—सदा बन्धरहितः।

**नित्यशुद्धः**—सर्वदा विकारलेशतोऽप्यसंस्पृष्टः।

**नित्यसंबन्धाभावः**—कश्चिन्नित्यः सम्बन्धो नास्ति। यतो हि स सम्बन्धः संयोगो वा भवेत् समवायो वा। नाद्य।—संयोगस्य कर्मजन्यतया नित्येषु व्यापकेषु च क्रियाया अभावेन संयोगासंभवात्। अनित्यानां संयोगसत्त्वेऽपि तस्य संयोगस्याप्यनित्यत्वात्।

ननु संयोगो माभूत नित्यः सम्बन्धः, समवायस्तु नित्यः सम्बन्धो भवेत् इति चेन्न, समवायः स्वयमसम्बद्धश्चेत् सम्बन्धिनोः परस्परं सम्बद्धत्वासंभवः। सम्बद्धश्चेत् केन सम्बन्धेन समवायः सम्बद्धः? सम्बन्धान्तरस्यासंभवात् समवायेनैव सम्बद्धो वक्तव्यः। तथा सति तस्याप्यन्यः तस्याप्यन्यः समवाय इत्यनवस्थाप्रसङ्ग इति समवायस्याप्यसिद्धेः। अनवस्थादोषपरिहाराय समवायस्य सम्बद्धत्वं ( वैशिष्ट्यम् ) यदि स्वरूपेणेष्येत तदा गुणऽभृतीनां वैशिष्ट्यबुद्धिरपि स्वरूपेणैवेष्यताम्, कृतं समवायेनेति। न चैवं संयोगोऽपि सम्बन्धो न सिध्येत्, भूतले घटवत्ताप्रतीतेः स्वरूपेणैवोपपत्तेरिति वाच्यम् वियोगकालेऽपि कुण्डवदरयोः स्वरूपसत्त्वेन विशिष्टबुद्धिप्रसङ्गात्। समवायस्थले च समवेतस्य कदापि स्वाश्रयवियोगो नास्तीति तत्र स्वरूपसम्बन्धस्वीकारे नायं दोषः। तस्मात् समवायः सम्बन्ध एव नास्तीति सांख्यमतम्। ( द्र० सां० प्र० भा० अ० ५ सू० ९८, ९९, १०० )।

**पङ्कजवत्**—यथा पङ्कजं पङ्कादुत्पन्नमपि न पङ्करूपतां धारयति तथैव प्रकृतिसहकारादुत्पन्नमपि आत्मज्ञानं मोक्षो वा न संसाररूपतां धारयति।

**पञ्चतन्मात्राणि**—शब्दतन्मात्रं, स्पर्शतन्मात्रं, रूपतन्मात्रं, रसतन्मात्रं, गन्धतन्मात्रञ्चेति।

**पञ्चशिखः**—आसुरिमुनेः शिष्यः कपिलमुनेः प्रशिष्यश्च। तत्र प्रमाणम्—'एतत्पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ। आसुरिरपि पञ्चशिखाय तेन च बहुधा कृतं तन्त्रम्' इति सांख्यकारिका ७०।

**पञ्चाग्नियोगः**—द्यु-पर्जन्य-धरा-पुरुष-योषिद्रूपाग्निपञ्चकेन सह सम्बन्धः। (द्र० सां० प्र० भा० अ० ४ सू० २२ तथा छां० उ० पञ्चमप्रपाठकः)।

**पदार्थसंख्याया अनियमः**—वैशेषिका हि द्रव्यादिषड्भावपदार्थान् मन्यन्ते, नैयायिकाश्च प्रमाणप्रमेयसंशयप्रयोजनेत्यादिषोडशपदार्थान् मन्यन्ते। उभयेऽपि ते तेषां पदार्थानां तत्त्वज्ञानान्मुक्तिर्भवतीति च मन्यन्ते। किन्तु अनियतपदार्थवादिसांख्यमते पदार्थसंख्यानियमो नास्ति। न वा तेषां पदार्थानां ज्ञानान्मुक्तिर्भवति, आत्मज्ञानादेव मुक्तिस्वीकारात्। (द्र० सां० द० अनि० वृ० अ० ५ सू० ८५-८६)।

**परमाणुसावयवत्वम्**—नैयायिकाद्यभ्युपगतं परमाणूनां निर्भागत्वं नास्ति, कार्यत्वात् इति सांख्यमतम्। अत एव तन्मात्राख्यसूक्ष्मद्रव्याण्येव पार्थिवाद्यणूनामवयवा इति पातञ्जले भाष्ये व्यासदेवैः प्रत्यपादि। (द्र० सां० प्र० भा० अ० ५ सू० ८८)।

**परिमाणद्वैविध्यम्**—सांख्यमते महत्परिमाणमणुपरिमाणञ्चेति द्विविधमेव परिमाणमस्ति। एतयोरेव प्रभेदा इतरे परिमाणविशेषाः। (द्र० सां० द० अनि० वृ० अ० ५ सू० ९०)। तत्र महत्परिमाणस्यावान्तरभेदावेव ह्रस्वदीर्घौ स्तोऽन्यथा वक्रादिरूपैः परिमाणानन्त्यप्रसङ्गात् इति। (द्र० सां० प्र० भा० अ० ५ सू० ९०)।

**पशुवत्**—यथा पशुः रज्ज्वा लिप्ततया बन्धमोक्षभागी भवति, तथैव प्रकृतिरेव धर्मादिभावैर्लिप्ततया बन्धमोक्षभागिनी भवति न पुरुष इति।

**पाञ्चभौतिकः**—पञ्चानां भूतानां मिलितानां परिणामो देहः इति कस्यचिन्मतम्।

पिङ्गलावत्—यथा पिङ्गला नाम वेश्या कान्तार्थिनी कान्तमलब्ध्वा दुःखिताऽभूत्, आशां विहाय तु सुखिनी बभूव। तथैव पुरुष आशां विहाय सन्तोषात् सुखी भवेत्। तदुक्तम्—आशा हि परमं दुःखं नैराश्यं परमं सुखम्। यथा सञ्छिद्य कान्ताशां सुखं सुष्वाप पिङ्गला इति। ( सां० प्र० भा० अ० ४ सू० २१ )।

पिशाचवत्—यथाऽर्जुनस्य कृते श्रीकृष्णेन तत्त्वोपदेशे क्रियमाणेऽपि समीपस्थस्य पिशाचस्यापि विवेकज्ञानं जातं तथैव ब्राह्मणं प्रति क्रियमाणं तत्त्वोपदेशं श्रुत्वा स्त्रीशूद्रादयोऽपि तत्त्वज्ञानिनः स्युः। ( द्र० सां० प्र० भा० अ० ४ सू० २ )।

पुमान्—शरीरादिव्यतिरिक्तश्चेतनः पुरुषः।

पुरुषः—असंहतो निर्गुणः कूटस्थो द्रष्टा भोक्ता विभुर्नित्यश्चित्स्वरूपः प्रतिशरीरं नाना चेति। पुरुषः, आत्मा, पुमान्, पुद्गलजन्तुः, जीवः क्षेत्रज्ञः इति पर्यायाः।

पूर्ववत्—प्रत्यक्षीकृतजातीयविषयकं पूर्ववदनुमानम्। यथा धूमेन वह्न्यनुमानम्। वह्निजातीयो हि महानसादौ पूर्वं प्रत्यक्षीकृतः। ( द्र० सां० प्र० भा० अ० १ सू० १०३ )।

वाचस्पतिमिश्रास्तु—दृष्टस्वलक्षणसामान्यविषयं यत् तत्पूर्ववत्। यथा धूमाद् वह्नित्वसामान्यविशेषः पर्वतेऽनुमीयते, तस्य च वह्नित्वसामान्यविशेषस्य स्वलक्षणं वह्निविशेषो दृष्टो रसवत्याम् ( महानसे )। ( द्र० सां० त० कौ० सां० का० ५ )।

पौरुषेयत्वम्—दृष्टं वस्तु भवेददृष्टं वा, यस्मिन् वस्तुनि कृतमिति बुद्धिरुपजायते तत् पौरुषेयम्। न तु पुरुषोच्चरितत्वं पौरुषेयत्वमिति सांख्याभिमतम्। तथा सति वेदानामपि आदिपुरुषोच्चरितत्वेन पौरुषेयत्वापत्तिः स्यात्। ( द्र० सां० प्र० भा० अ० ५ सू० ५० )। अनिरुद्धोऽप्याह—यस्मिन्नदृष्टेऽपि कृतबुद्धिरुपजायते तत् पौरुषेयम्। अस्मिन् मते न कार्य-

मात्रं सकर्तृकं किन्तु कार्यविशेषः। ( द्र० सां० द० अनि० वृ० अ० ५ सू० ५० )।

प्रकृतिः—सत्त्वरजस्तमसां साम्यावस्था, साम्यावस्थोपलक्षितं सत्त्वादित्रयं वा प्रकृतिः। साम्यावस्था च न्यूनाधिकभावेनासंहननम्-अकार्यावस्थेत्यर्थः। कार्यभिन्नं गुणत्रयं प्रकृतिरिति पर्यवसितम्। इदञ्च मूलप्रकृतिलक्षणम्। प्रकृतिसामान्यलक्षणन्तु तत्त्वान्तरोपादानत्वं प्रकृतित्वमिति। ( द्र० सां० द० अनि० वृ० अ० १ सू० ६१ )।

प्रतिबन्धः—अविनाभावो, व्याप्तिः। सा च उभयोः समव्याप्तिकयोः कृतकत्वानित्यत्वयोरेकतरस्य, विषमव्याप्तिकस्य धूमस्य वा नियतधर्मसाहित्यम्, साध्यात्मकधर्मसाहित्यं वा। तच्च साहित्यं वह्निधूमयोर्निजा सहजा शक्तिरिति साँख्यमतमित्याह वृत्तिकारः, सूत्रे 'आचार्याः' इति सम्मानप्रदर्शनात्। ( द्र० सां० द० अनि० वृ० अ० ५ सू० ३०-३१ )।

प्रतिबद्धः—व्यापकः साध्यभूतः।

प्रधानाविवेक एव सर्वाविवेकहेतुः—सर्वेषां मूलं प्रधानम्। तस्याविवेकादन्याविवेकस्य सम्भवः। पदार्थानामन्योन्यं भवत्वविवेको विवेको वा, न तेन बन्धमोक्षौ, किन्तु प्रधानविवेकाविवेकाभ्याम्। अतः प्रधानाविवेकहाने सति सर्वाविवेकहानम् भवतीति। ( द्र० सां० द० अनि० वृ० अ० १ सू० ५७ )।

प्रमा—इन्द्रियादिप्रणालिकया साक्षाद्वा या अज्ञातार्थविषयिणी चित्तवृत्तिः, तज्जन्यः पौरुषेयो बोधः प्रमा। तथा च सांख्यसूत्रम्—द्वयोरेकतरस्य वाऽप्यसन्निकृष्टार्थपरिच्छित्तिः प्रमा। ( अ० १ सू० ८७ )। अत्र असन्निकृष्टः प्रमातर्यनारूढोऽनधिगत इति यावत्। एवम्भूतस्यार्थस्य वस्तुनः परिच्छित्तिरवधारणं प्रमा। (सां०प्र०भा० अ० १ सू० ८७)। अत्र वृत्तिकारः—सूत्रे द्वयोरिति पदस्य इन्द्रियार्थयोर्विद्यमानयोरित्यर्थः प्रत्यक्षाभिप्रायेण। तथा एकतरस्येति पदस्य लिङ्गस्य शब्दस्य वा विद्यमानस्येत्यर्थोऽनुमानाभिप्रायेण

शब्दाभिप्रायेण चेत्याह। वाचस्पतिमिश्रा अपि 'प्रमीयतेऽनेनेति निर्वचनात् प्रमां प्रति करणत्वमवगम्यते। तच्चासंदिग्धाविपरीतानधिगतविषया चित्तवृत्तिः। बोधश्च पौरुषेयः फलं प्रमा' इत्याहुः। (सां० त० कौ० का० ४)।

**प्रमाणम्**—पौरुषेयबोधरूपां प्रमां प्रति यत् साधकतमं तत् प्रमाणम्। द्रष्टव्यम्—द्वयोरेकतरस्य वाप्यसंनिकृष्टार्थपरिच्छित्तिः प्रमा, तत्साधकतमं यत् तत् त्रिविधं प्रमाणम्।( सां० द० अ० वृ० १ सू० वृ० ८७ )।बोधश्च पौरुषेयः फलं प्रमा, तत्साधनं प्रमाणमिति सांख्यतत्त्वकौमुदी। (सां० का० ४)। अस्मिन् पक्षे पौरुषेयो बोधः प्रमा, तत्कारणभूता चित्तवृत्तिः प्रमाणम्। यदा तु अर्थाकारा चित्तवृत्तिरेव प्रमापदेन व्यपदिश्यते तदा तत्कारणभूताः इन्द्रियसंनिकर्षादय एव प्रमाणतया व्यवह्रियन्त इति मन्तव्यम्।

**प्रमेयम्**—प्रमाविषयीभूता ये ते प्रमेयपदेनोच्यन्ते। सांख्याभिमतं प्रमेयम्—प्रधानं, बुद्धिः, अहङ्कारः, पञ्चतन्मात्राणि, एकादशेन्द्रियाणि, पञ्चमहाभूतानि, पुरुष इति। एतानि पञ्चविंशतितत्त्वानि व्यक्ताव्यक्तज्ञा इत्युच्यन्ते। ( द्र० सां० का० ४ गौडपादभाष्यम् )। परमात्मापि षड्विंशः प्रमेयभूतः पदार्थः पुरुष एवान्तर्भूत इति विज्ञानभिक्षुः।

**प्रत्यक्षम्**—'यत् सम्बद्धं सत् तदाकारोल्लेखि विज्ञानं तत् प्रत्यक्षम्' इति सांख्यसूत्रम् ( अ० १ सू० ८९ )। सम्बद्धं भवत् सम्बद्धवस्त्वाकारधारि भवति यद् विज्ञानं बुद्धिवृत्तिस्तत् प्रत्यक्षं प्रमाणमिति निष्कर्ष इति सांख्यप्रवचनभाष्यम्। प्रतिविषयाध्यवसायो दृष्टम् ( प्रत्यक्षम् ) इति सांख्यकारिका। अत्र गौडपादभाष्यम्—प्रतिविषयेषु श्रोत्रादीनां शब्दादिविषयेषु अध्यवसायो दृष्टं = प्रत्यक्षमित्यर्थ इति। वाचस्पतिमिश्रास्तु—विषयं विषयं प्रति वर्तत इति प्रतिविषयम् = इन्द्रियम्। वृत्तिश्च सन्निकर्षः = अर्थसन्निकृष्टमित्यर्थः। तस्मिन् अध्यवसायः = तदाश्रित इत्यर्थः। अध्यवसायश्च बुद्धिव्यापारो ज्ञानम्। उपात्तविषयाणामिन्द्रियाणां वृत्तौ ( सन्निकर्षे ) सत्यां तमोऽभिभवे सति यः सत्त्वसमुद्रेकः, सोऽध्यवसाय इति वृत्तिरिति ज्ञानमिति चाख्यायते। इदं तावत् प्रत्यक्षं प्रमाणमिति। ( सां० त० कौ० का० ५ )। इदञ्च

प्रत्यक्षलक्षणं बाह्यप्रत्यक्षाभिप्रायेण। योगिनान्तु प्रत्यक्षमबाह्यम् अतो न तल्लक्ष्यं न वा तत्रेन्द्रियसन्निकर्षापेक्षा। अथवेन्द्रियसन्निपाताभावेऽपि योगज-धर्मजन्यातिशयसाहाय्येनैव योगिबुद्धिरर्थैः सन्निकृष्यते, अर्थाकारताञ्च धार-यतीति सन्निकर्षद्वाराऽर्थाकारताग्रहणरूपं सूत्रोक्तं प्रत्यक्षसामान्यलक्षणं योगि-प्रत्यक्षेऽपि घटत एव। इन्द्रियसन्निकर्षापेक्षा तु चाक्षुपादिविशेषप्रत्यक्ष एव भवतीति। सर्वथैव सन्निकर्षानपेक्षे नित्ये ईश्वरप्रत्यक्षे उक्तलक्षणस्या-व्याप्तिरिति न शङ्कनीयम् ईश्वरे प्रमाणाभावात्। इदमुत्तरमेकदेशिनामभि-प्रायेणेति विज्ञानभिक्षवः। तद्रीत्या ईश्वरप्रत्यक्षसाधारणं लक्षणन्तु सन्निकर्ष-जन्यज्ञानसजातीयत्वमेव सूत्रकारैर्विवक्षितम्। (द्र० सां० प्र० भा० अ० १ सू० ९२)।

प्रत्यक्षे रूपनिबन्धनत्वाभावः—'प्रकृतिपुरुषयोः साक्षात्कारोऽसंभवी, द्रव्य-साक्षात्कारं प्रति रूपस्य हेतुत्वात्' इति नास्तिकमतं निराकुर्वाणं सांख्यं द्रव्यप्रत्यक्षं प्रति रूपस्य निमित्तत्वमिति नियमं नानुमन्यते। अतो बहिर्द्रव्य-लौकिकप्रत्यक्षं प्रत्येवोद्भूतरूपं व्यञ्जकमिति। (द्र० सां० प्र० भा० अ० ५ सू० ८९)।

प्रबुद्धरज्जुतत्त्वोरगः—यथा प्रबुद्धरज्जुतत्त्वस्यैव जनस्य कृते उरगो भयादिकं न जनयति, मूढं प्रति तु जनयत्येव। तथैव एकस्मिन् पुरुषे विविक्तबो-धानन्तरं विरक्तमपि प्रधानं नान्यस्मिन् पुरुषे सृष्ट्युपरागाय विरक्तं भवति किन्तु तं प्रति सृजत्येव। (द्र० सां० प्र० भा० अ० ३ सू० ६६)।

प्राणवायुभौतिकवाय्वोर्भेदः—शरीरारम्भे निमित्तभूतो भौतिको वायुर्न तु प्राण-वायुः। तथा च सूत्रम् 'न देहारम्भकस्य प्राणत्वमिन्द्रियशक्तितस्तत्सिद्धेः' इति। (सां० द० अ० ५ सू० ११३)।

प्राणादिः—प्राणाद्याः वायुविशेषाः। प्राणोऽपान उदानो व्यानः समानश्चेति पञ्च।

प्राप्यकारीणीन्द्रियाणि—इन्द्रियाणां नाप्राप्तप्रकाशकत्वं किन्तु प्राप्तप्रकाशकत्व-

मेव । अर्थात् स्वसम्बद्धमेवार्थम् इन्द्रियाणि प्रकाशयन्ति । एतावता गोलकातिरिक्तमिन्द्रियमिति सांख्यसिद्धान्तः । ( द्र० सां० प्र० भा० अ० ५ सू० १०४ ) ।

बन्धः—संसरणम् । स च त्रिविधो बन्धः—प्राकृतिको वैकृतिको दाक्षिणकश्चेति । तत्र प्रकृतावात्मज्ञानाद् ये प्रकृतिमुपासते तेषां प्राकृतिको बन्धः । अयमेव प्रकृतिलयानां बन्ध इत्युच्यते । द्वितीयो वैकारिको बन्धस्तेषां ये विकारानेव भूतेन्द्रियाहङ्कारबुद्धीः पुरुषधियोपासते । अयं बन्धो येषां ते विदेहा इत्युच्यन्ते । इष्टापूर्त्तेन = अग्निहोत्रादिना यज्ञेन वापीकूपतडाकादिनिर्माणादिना च दाक्षिणको बन्धः । पुरुषतत्त्वानभिज्ञो हीष्टापूर्तकारी कामोपहतमना बध्यत इति । ( द्र० सां० त० कौ०, का० ४४ ) ।

बाह्यकरणम्—पञ्चज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि चेति दशविधं बाह्यकरणम् ।

बुद्धिः—महत्तत्त्वम् । बुद्धेरेव महानित्यपि तान्त्रिकी संज्ञा ।

ब्रह्मरूपता—'समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपता इति सूत्रानुसारमासु अवस्थासु पुरुषाणां बुद्धिविलयतो बुद्ध्यौपाधिकपरिच्छेदविगमेन स्वस्वरूपे पूर्णतयाऽवस्थानं यद् भवति, तदेव ब्रह्मरूपताऽस्ति । यथा घटध्वंसे जाते घटाकाशस्य पूर्णता सम्पद्यत इति । तथा चैवंविधं ब्रह्मत्वमेव पुरुषाणां स्वभावोऽस्ति, य उक्तास्ववस्थासु अभिव्यक्तो भवतीति । अस्मिन् शास्त्रे ब्रह्मशब्द औपाधिकपरिच्छेदमालिन्यादिरहितपरिपूर्णचेतनसामान्यवाचीति विज्ञानभिक्षुः । ( द्र० सां० प्र० भा० अ० ५ सू० ११६ ) ।

अनिरुद्धस्तु—अत्र ब्रह्मणा तुल्यतैव ब्रह्मरूपताऽभिप्रेता । तुल्यता च बाह्यासंवेदनमात्रेण । तिसृष्वपि अवस्थासु बाह्यासंवेदनस्य समानत्वात् । न तु वास्तविकी ब्रह्मरूपता दुःखासंवेदनरूपाऽभिप्रेता, तस्याः सुषुप्तिसमाध्योरभावात् ।

अयमत्र विशेषः—समाधिसुपुप्त्योः सबीजा अर्थात् पुनर्दुःखप्रयोजकसंस्कारवत्त्वरूपा ब्रह्मरूपता भवति, मोक्षे तु निर्बीजा अर्थात् तादृशसंस्काररहिता ब्रह्मरूपता भवति। ( द्र० सां० सू० अनि० वृ० अ० ५ सू ११६-११७ )।

भरतवत्—यथा भरतस्य राजर्षेर्धर्म्यमपि अनाथहरिणशावकस्य पोषणं बन्धायाभवत् तथैव विवेकिनोऽपि असाधनानुचिन्तनं बन्धाय भवेत्। ( सां० प्र० भा० अ० ४ सू० ८७ )

भावसर्गः—धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्यरूपाणामष्टभावानां सर्गः।

भृत्यवत्—यथा उत्कृष्टभृत्यस्य स्वभावादेव प्रतिनियताऽऽवश्यकी स्वामिसेवा प्रवर्तते, न तु स्वभोगाभिप्रायेण, तथैव प्रकृतेश्चेष्टा स्वभावादेव भवतीति।

भूतचैतन्याभावः - विभागकाले प्रत्येकं भूतेषु चैतन्यादर्शनात् सङ्घातावस्थायामपि चैतन्यं नोद्भवितुमर्हतीति। यत्र स्वल्पा शक्तिरस्ति तस्य समुदायान्महच्छक्तिर्जायते, यथा तन्तूनां स्वल्पशक्तिमतां समुदायाद् गजबन्धनशक्तिर्दृश्यते। किन्तु भूतानां तथा पृथक् चैतन्यं न दृष्टं येन सङ्घाते चैतन्योद्भवः स्यात्। तस्माद् भूतेषु चैतन्यं नास्ति, किन्तु तेभ्योऽन्य एव चेतनोऽस्तीति सिद्धान्तः।

भूतम्—आकाशो, वायुस्तेजो, जलं, पृथिवी चेति पञ्चविधम् भूतम्।

भूतादिः—तामसः ( अहङ्कारः )।

भेकीवत्—शास्त्रविहितनियमस्य विस्मरणेऽपि योगिनो अनर्थं उपजायते, का कथा नियमोल्लङ्घनस्येति भेकी–( मण्डूकी ) दृष्टान्तेन स्फुटयति। कश्चिद्राजा मृगयां गतो विपिने सुन्दरीं कन्यां ददर्श। तां प्रति राजा स्वभार्याभावाय प्रार्थितवान्। प्रार्थिता सा नियमं कृतवती यद् यदा मह्यं त्वया जलं प्रदर्श्यते तदाऽहमितो गता भविष्यामीति। एकदा क्रीडया परिश्रान्ता सा राजानं पृष्टवती कुत्र जलमिति। राजाऽपि अङ्गीकृतं समयं विस्मृत्य तां

जलमदर्शयत् ततः सा भेकराजदुहिता कामरूपिणी भेकी भूत्वा जलं विवेश। ततश्च राजा जालादिभिरन्विष्यापि न तामविन्दत् इति। एवमेव स्वनियमविस्मरणे योगिनोऽनर्थं उपजायत इति। ( द्र० सां० प्र० भा० अ० ४ सू० १६ )।

**भोग**—विषयभोगः। स च अभ्यवहरणम् आत्मसात्करणमिति यावत्। विषयस्यात्मसात्करणञ्च पुरुषे प्रतिबिम्बनमात्रम्, तस्यापरिणामित्वात्। पुरुषातिरिक्तानां देहादीनान्तु भोगः पुष्ट्यादिरूपः आकारग्रहणरूपश्च, तेषां परिणामित्वात्। इत्थञ्च भोगो देहादिचेतनान्तेषु साधारणः। क्वचित् पुरुषे भोगस्य प्रतिषेधः परिणामरूपस्यैव न तु प्रतिबिम्बादानरूपस्येति। वस्तुतस्तु फलात्मको भोगः पुरुष एव न तु बुद्ध्यादौ। सुखं भुञ्जीयेति कामनादर्शनात्। तस्मात् सुखदुःखादिकं बुद्धिधर्मस्तद्भोगस्तु पुरुषस्य भवतीति मुख्यः सिद्धान्तः। ( द्र० सां० प्र० भा० अ० १ सू० १०३, १०६ )।

**भौतिकः सर्गः**—भूतानां व्यष्टिप्राणिनां सर्गः। स च त्रिविधः—दैवसर्गः, तैर्यग्योनसर्गः, मानुष्यसर्गश्चेति। तत्र ब्राह्मप्राजापत्यैन्द्रपैत्रगान्धर्वराक्षसपैशाचा इत्यष्टविधो दैवः सर्गः। तथा पशुमृगपक्षिसरीसृपस्थावरा इति तैर्यग्योनः पञ्चविधः सर्गः। मानुष्यसर्गश्चैकप्रकार एव भवति, सर्वेष्वपि नरेषु संस्थानस्य समानत्वात्। एतदुक्तं सांख्यकारिकायाम्—

"अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति। मानुष्यश्चैकविधः समासतो भौतिकः सर्गः इति। ( सां० का० ५३ )।

**मध्यविवेकः**—सकृत्संप्रज्ञातयोगेनात्मसाक्षात्कारोत्तरं मध्यविवेकावस्था भवति। तदानीं बाधितानापि दुःखादीनां प्रारब्धवशात् प्रतिबिम्बरूपेण पुरुषेऽनुवृत्त्या भोगो भवति। विवेकनिष्पत्तिश्च पूर्णरूपेण असंप्रज्ञातादेव भवति, तस्यां सत्यां भोगो न भवति। इत्थञ्च मन्दविवेको मध्यविवेको विवेक-

निष्पविश्चेति विभागो विवेकस्य। (द्र० सां० प्र० भा० अ० ३ सू० ७७)।

**मध्यमपरिमाणं मनः**—मनो न विभु, करणत्वात्, वास्यादिवत् इत्यनुमानेन मनसो विभुत्वं निषिद्धं भवति। लोकान्तरगमनश्रुतिरपि मनसो विभुत्वे बाधिका। यदि मनो व्यापकं स्यात्तदा लोकान्तरगमनं नोपपद्येत, विभुत्वेनैव लोकान्तरेऽपि सत्त्वात्। नाप्यणु मनः, अनेकेन्द्रियेषु एकदा तस्य योगात्। देहव्यापिज्ञानादिकन्तु मध्यमपरिणामेनैवोपपद्यते। इदञ्च कार्यावस्थमनोऽभिप्रायेणोक्तम्। कारणावस्थश्चान्तःकरणमण्वेव। (द्र० सां० प्र० भा० अ० ५ सू० ६९, ७०, ७१)।

**मध्यस्थः**—सुखदुःखाभ्यां रहित उदासीनः (पुरुषः)।

**मनः**—तृतीयमन्तःकरणं सङ्कल्पधर्मकम्। उक्तं हि—सङ्कल्पेन रूपेण मनो लक्ष्यते। आलोचितमिन्द्रियेण वस्त्विदमिति संमुग्धम् 'इदमेवं' 'नैवम्' इति सम्यक्कल्पयति विशेषणविशेष्यभावेन विवेचयतीति। (सां० त० कौ० का० २७)।

**मन्त्रार्थवादयोः प्रामाण्यम्**—कार्यान्विते एव शक्तिरिति नास्ति नियमः, उभयथा दर्शनात्। तस्माद् विधिवाक्यानां कार्यार्थप्रतिपादकतया प्रामाण्यम्। मन्त्रार्थवादयोस्तु सिद्धार्थप्रतिपादकयोरपि अस्ति प्रामाण्यम्। तत्र मन्त्राणां विहितस्मारकत्वेन, अर्थवादानां विधिशक्तेरुत्तम्भकत्वेन परम्परया प्रवर्तकत्वात् प्रामाण्यमिति। (द्र० सां० सू० अनि० वृ० अ० ५ सू० ३९)।

**मलिनदर्पणवत्**—यथा मलैः प्रतिबन्धात् मलिनदर्पणेऽर्थो न प्रतिबिम्बति तथैव मलिनचेतसि उपदेशात् आपातज्ञानपि न जायते, विषयान्तरसञ्चारादिना प्रतिबन्धात् (द्र० सां० प्र० भा० अ० ४ सू० २९)।

**महान्**—बुद्धितत्त्वम्। महान् बुद्धिरासुरीमतिः ख्यातिर्ज्ञानमिति प्रज्ञापर्यायैरुत्पद्यते इति गौडपादभाष्यम्। महान् बुद्धिर्मतिर्ब्रह्मापूर्तिः ख्यातिरीश्वरो विश्वरइति पर्यायाः। स तु देशमहत्त्वात् कालमहत्त्वाच्च महान्। सर्वोत्पाद्येभ्यो महापरिमाणयुक्तत्वात् महानिति युक्तिदीपिका।

प्रकृतिमहतोरन्तराले मूलप्रकृतेरुत्पन्ना विषमावस्थापन्नास्त्रयो गुणा जायन्त इति कस्यचिन्मतम् ।

मायिकत्वम्—असत्यत्वम्, अस्थिरत्वं कार्यत्वं वा ।

मुक्तिर्नानन्दाभिव्यक्तिरूपा—आत्मनि आनन्दरूपोऽभिव्यक्तिरूपश्च धर्मो नास्ति । स्वरूपञ्च तस्यात्मनो नित्यमेवेति नानन्दाभिव्यक्तिर्मोक्ष इति सांख्यमतम् । अत एव नैयायिकादिवदशेषविशेषगुणोच्छेदोऽपि न मुक्तिः, आत्मनो निर्धर्मकत्वात् । न च तर्हि दुःखाभावस्यापि धर्मत्वात् सांख्यैर्दुःख-निवृत्तिरपि कथं मोक्ष उच्येतेति शङ्कनीयम्, तदानीं सदपि दुःखं केवल-मात्मनो भोग्यं न भवतीत्येतावन्मात्रतात्पर्यसत्त्वात् ।

एवं ब्रह्मलोकप्राप्तिरपि न मोक्षः, आत्मनो निष्क्रियत्वात् ।

एवमेव सर्वोच्छेदः शून्यत्वं वापि न मोक्षः, अपुरुषार्थत्वात् ।

एवमंशभूतस्य जीवस्यांशिनि परमात्मनि लयोऽपि न मोक्षः, संयोगानां वियोगान्ततया मुक्तेरनित्यत्वप्रसङ्गात्, स्वलयस्यापुरुषार्थत्वाच्च । ( द्र० सां० प्र० भा० अ० ५ सू० ७४.....८३ ) ।

मुनिवत्—यथा सौभरेर्मुनेर्न भोगाद् रागशान्तिरभूत्, एवमन्येषामपि भोगाद् रागशान्तिर्न भवितुमर्हति । तदुक्तम् सौभरिणैव—

आमृत्युतो नैव मनोरथानामन्तोऽस्ति विज्ञातमिदं मयाद्य मनोरथासक्तिपरस्य चित्तं न जायते वै परमार्थसङ्गि ॥ इति । ( द्र० सां० प्र० भा० अ० ४ सू० २७ ) ।

मूलम्—उपादानम्, मूलप्रकृतिः तथा च सांख्यसूत्रम्—'मूले मूलाभावादमूलं मूलम्' अ० १ सू० ३२ ।

यज्ञोपासकवत्—यथा यज्ञोपासकानां याज्ञिकानां साक्षात् ज्ञाननिष्पत्तिर्नास्ति, तथैव ब्रह्मविष्णुहरादीनामध्यस्तरूपैरुपासनादपि न साक्षात्ज्ञाननिष्पत्ति-

र्मवितुमर्हति किन्तु पारम्पर्येण । अर्थात् ब्रह्मादिलोकप्राप्तिक्रमेणैव सत्त्वशुद्धिद्वारा वा भवतीति । ( द्र० सां० प्र० भा० अ० ४ सू० २१ )।

**योगसिद्धीनां वास्तविकत्वम्**—यथौषधादिसिद्धयो यथार्थाः तथा योगसिद्ध्योऽपि यथार्था एव सन्ति ।

**रागः**—सुखानुशयी । सुखमनुशेते, इति व्युत्पत्तेः सुखात् पश्चात् प्रवर्तमान इति यावत् ।

**राजपुत्रवत्**—यथा कश्चिद्राजपुत्रो गण्डर्क्षजन्मना पुरान्निःसारितः शबरेण च केनचित् पोषितस्सन् 'अहं शबर' इत्यभिमन्यमान आस्ते । तं ज्ञात्वा कश्चिदमात्यः प्रबोधयति—न त्वं शबरोऽसि किन्तु राजपुत्रोऽसीति । एवं प्रबोधितः स झटित्येव चाण्डालाभिमानं त्यक्त्वा तात्त्विकं राजभावमनुभवति राजाऽहमस्मीति । एवमेव त्वमिन्द्रियाद्यतिरिक्तः सुखदुःखादिलेपरहितो नित्यशुद्धबुद्धमुक्तस्वभावोऽसीति कस्यचित् कारुणिकस्योपदेशात् पुरुषोऽपि प्रकृत्यभिमानं त्यक्त्वा स्वरूपावस्थितिं प्राप्नोति । ( द्र० सां० प्र० भा० अ० ४ सू० १ )।

**लयः**—सूक्ष्मीभावेन अवस्थानम् न तु नाशः । ( द्र० सां० प्र० भा अ० १ सू० ६१ )।

**लिङ्गम्**—लिङ्गशरीरम्, सूक्ष्मशरीरापरपर्यायम् । तच्च एकादशेन्द्रियाणि, पञ्चतन्मात्राणि, बुद्धिरहङ्कारश्चेत्यष्टादशतत्त्वेभ्यः समुत्पन्नम् ।

विज्ञानभिक्षुस्तु—अहङ्कारं बुद्धावन्तर्भाव्य सप्तदशतत्त्वेभ्य एव लिङ्गशरीरमुत्पद्यतइत्याह । तत्र प्रमाणञ्च—'वासनाभूतसूक्ष्मञ्च कर्मविद्ये तथैव च । दशेन्द्रियं मनो बुद्धिरेतल्लिङ्गं विदुर्बुधाः' इति वाशिष्ठवाक्यम् । ( द्र० सां० प्र० भा० अ० ३ सू० १२ )। तच्चाणुपरिमाणं भवति ।

**लोकवत्**—यथा लोके भैषज्यादौ विहितपथ्यादीनां लङ्घनेन तत्तत्सिद्धिर्नभवति, तथैव योगिनां शास्त्रेषु विहितानां नियमानामुल्लङ्घने ज्ञाननिष्पत्तिरूपप्रयोजनं न सिध्यति । ( सां० प्र० भा० अ० ४ सू० १५ )।

वामदेववत्—यथा वामदेवस्यैहिकसाधनाभावेऽपि जन्मान्तरीयसाधनेभ्यो गर्भ एव ज्ञानोदयस्तथा अन्यस्यापि ऐहिकसाधनादेव ज्ञानोदयो भवतीति कालनियमो नास्ति । ( द्र० सां० प्र० भा० अ० ४ सू० २० ) ।

विपर्ययः—अज्ञानं, विवेकाग्रहो बन्धहेतुभूतः । स पञ्चविधः, अविद्याऽस्मिता-रागद्वेषाभिनिवेशभेदात् ।

विरक्तः—विवेकख्यात्या समुत्पन्नवैराग्यः ।

विरोचनवत्—यथा प्रजापतेरुपदेशश्रवणेऽपि इन्द्रविरोचनयोर्मध्ये विरोचनो विचाराभावेन भ्रान्तो जातः, तथैव विचारं ( मननं ) विना उपदेशवाक्य-श्रवणेऽपि नियमतस्तत्त्वज्ञानं नैव जायते । ( द्र० सां० प्र० भा० ४ सू० १७ ) ।

विशेषाः—शान्तघोरमूढस्वरूपाणि क्षित्यादीनि पञ्च स्थूलभूतानि सूक्ष्मशरीराणि, मातापितृजानि स्थूलशरीराणि चेति त्रिधा विशेषा भवन्ति । द्रष्टव्यम्— '......तेभ्यो भूतानि पञ्च पञ्चभ्यः । एते स्मृता विशेषा शान्ता घोराश्च मूढाश्च ॥ सूक्ष्मा मातापितृजा सह प्रभूतैस्त्रिधा त्रिशेषाःस्युः । सूक्ष्मास्तेषां नियता मातापितृजा निवर्तन्ते ॥' इति । ( सां० का० ३८-३९ ) ।

वृक्षादीनां शरीरम्—शरीरत्वं हि भोक्तृभोगायतनत्वमिति लक्षणस्य वृक्षादावपि सत्त्वेन शरीरत्वं वृक्षादिष्वपीति सिद्धान्तः । न हि चाक्षुषादिज्ञानं यत्रास्ति तदेव शरीरमिति नियमोऽस्ति । अतोऽन्तःसंज्ञानां वृक्षादीनामपि शरीरत्वं मन्तव्यम् । तथा च श्रुतिः—'अथ यदेकां शाखां जीवो जहाति अथ सा शुष्यतीत्यादिः । ( द्र० सां० प्र० भा० अ० ५ सू० १२१ ) ।

वृत्तयः—क्लिष्टा अक्लिष्टाश्च पञ्चतय्यो वृत्तयःप्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतिरूपाः ।

वृत्तिः—वृत्तिर्न अग्नेर्विस्फुलिङ्गवद् भागरूपा (अंशरूपा), न वा रूपादिवद् गुण-रूपा, किन्तु भागगुणाभ्यां भिन्ना तदेकदेशभूतेति सांख्यमतम् । वृत्तेर्भागरूपत्वे गोलकस्थस्य चक्षुषः सूर्यादिना सह सम्बन्धो न घटेत । गुणत्वे तु तस्यां

सूर्यादिपर्यन्तं सर्पणादिक्रिया नोपपद्येत। एवं बुद्धिवृत्तिरपि प्रदीपशिखावद् द्रव्यात्मकपरिणाम एव बुद्धेः। सा च स्वच्छतयाऽर्थाकारतोद्ग्राहिणी निर्मलवस्त्रवत्। ( द्र० सां० प्र० भा० अ० ५ सू० १०७ )।

**वृत्तिस्तत्त्वान्तरम्**—कार्यानुमेया वृत्तिस्तत्त्वान्तरमाहङ्कारिकम्। यतो हि सांख्येऽनियतः पदार्थः। ( द्र० सां० द० अनि० वृ० अ० ५ सू० १०७ )। विज्ञानभिक्षुस्तु अनियतपदार्थवादित्वं सांख्यस्य नाङ्गीकुरुते। अतो बुद्धेरिन्द्रियादेश्चैकदेशभूतैव वृत्तिरिति तन्मतम्।

**वैकृतः**—सात्विकः ( अहङ्कारः )।

**वैराग्यम्**—विषयं प्रति वैतृष्ण्यम् वैराग्यम्। तच्चतुर्विधम्—यतमानसंज्ञा-व्यतिरेकसंज्ञा-एकेन्द्रियसंज्ञा-वशीकरसंज्ञा चेति। प्रपञ्चितं चैतद्योगभाष्या-दाविति तत एव विशेषतः प्रतिपत्तव्यम्।

**व्याप्तिः**—नियतधर्मसाहित्यम् उभयोरेकतरस्य वा व्याप्तिः। साहित्यं सहचारः। तथा चोभयोः साध्यसाधनयोरेकस्य साधनमात्रस्य वा नियतः = अव्यभिचरितो यः सहचारः स व्याप्तिरित्यर्थः। उभयोरिति समव्याप्तिपक्षे प्रोक्तं, यथाऽनित्यत्वकृतकत्वयोः। एकतरस्येति विषमव्याप्तिपक्षे प्रोक्तम्, यथा वह्निधूमयोरिति। अयं सिद्धान्तपक्ष इति विज्ञानभिक्षुः। ( द्र० सां० प्र० भा० अ० ५ सू० २९ )।

केचिदाचार्या[1]:—निजशक्त्युद्भवं स्वशक्तिजन्यं शक्तिविशेषरूपं तत्त्वान्तरं व्याप्तिरित्याहुः। बुद्ध्यादिषु प्रकृत्यादिव्याप्यताव्यवहारात् आधारताशक्ति-र्व्यापकता, आधेयताशक्तिश्च व्याप्यत्वमिति पञ्चशिखाचार्यमतम्। ( द्र० सां० प्र० भा० अ० ५ सू० ३१-३२ )।

**षष्टितन्त्रम्**—षष्टिपदार्थबोधकं शास्त्रं षष्टितन्त्रम्। तच्च किमपि ग्रन्थान्तरं कपिलकृतिरिदानीं लुप्तमिति बहवः। वर्तमानसूत्रषडध्यायी एव षष्टितन्त्र-मित्युदयवीरशास्त्री। षष्टितन्त्रनामकरणे च तद्गतविचार्यमाणविषयाणां

---

१. वृत्तिकारस्येदमेव मतमभिप्रेतम्।

षष्टिसंख्याकत्वमेव निदानम् । षष्टिविषयाश्च—पञ्च विपर्यया:, नव तुष्टय:, अष्टौ सिद्धय:, अष्टाविंशतिरशक्तय:, दश मौलिकार्थाश्चेति ।

**शक्ति:**—'वाच्यवाचकभाव: सम्बन्ध: शब्दार्थयो:' इति सूत्रानुसारं वाच्यतारूपा शक्तिरर्थे, वाचकतारूपा शक्ति: शब्देऽस्तीति वाच्यवाचकभाव एव शब्दार्थयो: शक्ति: । तस्याश्च शक्तेस्त्रिभि: कारणैर्ग्रहणं भवति । आप्तोपदेशेन, वृद्धव्यवहारेण, प्रसिद्धपदसामानाधिकरण्येन चेति । ( द्र० सां० प्र० भा० अ० ५ सू० ३७-३८ ) । आप्तोपदेशो यथा—कोकिल: पिकशब्दवाच्य इति आप्तवचनात् पिकादिशब्दानां कोकिले शक्तिग्रह: । वृद्धव्यवहारो यथा—प्रयोजकवृद्धेन 'घटमानय' इत्युक्ते तच्छ्रुत्वा प्रयोज्यवृद्धेन घट आनीतस्तदवधार्य पार्श्वस्थो वालो घटानयनरूपं कार्यं घटमानयेति शब्दप्रयोज्यमित्यवधारयति । ततश्च 'घटं नय, गामानय' इत्यादि वाक्यादवापोद्वापाभ्यां घटादिपदानां घटादौ शक्तिं गृह्णाति ।

प्रसिद्धपदसामानाधिकरण्यं यथा—'इह सहकारतरौ मधुरं पिका रौति' इत्यादौ पिकशब्दस्य कोकिले शक्तिग्रह इति । ( द्र० न्या० सि० मु० शब्दखण्डम् ) ।

**शब्द:**—आप्तोपदेश: शब्द: । आप्तिरत्र योग्यता । तथा च योग्य: शब्दस्तज्जन्यं ज्ञानं ( वृत्ति: ) शब्दप्रमाणम् । ( सां० प्र० भा० अ० १ सू० १०१ ) । आप्तश्रुतिराप्तवचनमिति सांख्यकारिका । तत्राप्ता प्राप्ता युक्तेति यावत् । आप्ता चासौ श्रुतिश्चेति आप्तश्रुति: । श्रुतिर्वाक्यजन्यं वाक्यार्थज्ञानमिति वाचस्पतिमिश्रा: ।

**शब्दानित्यत्वम्**—शब्दो नित्य इति मीमांसकमतम् । तत् सांख्या नानुमन्यन्ते । उत्पन्नो गकारो नष्टो गकार इत्यादिकार्यताप्रतीते: । स एवायं गकार इति प्रत्यभिज्ञा सैवेयं दीपकलिकेतिवत् जातिविषयिणी । अन्यथा घटादेरपि प्रत्यभिज्ञया नित्यतापत्ते: । ( द्र० सां० प्र० भा० अ० २ सू० ५८ ) ।

**शब्दार्थयो: सम्बन्ध:**—शब्दार्थयोर्वाच्यवाचकभाव एव सम्बन्धो न पु तादात्म्यं, तथा सति घटोऽपि श्रोत्रग्राह्य: स्यात् शब्दोऽपि चाक्षुष: स्यात् अग्न्यादि-

शब्दोच्चारणे मुखदाहादिप्रसङ्गश्च स्यादिति । ( द्र० सां० द० अनि० वृ० अ० ५ सू० ३७ ) ।

**शब्दार्थसम्बन्धानित्यत्वम्**—शब्दार्थयोः सम्बन्धोऽनित्य इति सांख्यमतम् । न तु मीमांसकवत् नित्यः शब्दार्थसम्बन्ध इति । तथा च सांख्यसूत्रम्—'न सम्बन्धनित्यतोभयानित्यत्वात् ।' ( अ० ५ सू० ९७ ) । उभयोः शब्दार्थयोरनित्यत्वात् तत्सम्बन्धस्याप्यनित्यत्वमिति भावः ।

**शरीरभेदाः**—उष्मजम्--अण्डजं-जरायुजम्--उद्भिज्जं--संकल्पजं--सांसिद्धिकञ्चेति शरीरस्य षड्भेदाः । तत्रोष्मजा दन्दशूकादयः, अण्डजाः पक्षिसर्पादयः, जरायुजा मनुष्यादयः, उद्भिज्जा वृक्षादयः, संकल्पजाः सनकादयः सांसिद्धिका मन्त्रतपआदिसिद्धिजाः रक्तबीजशरीरोत्पन्नदेहाः । तथा च सांख्यसूत्रम्—'उष्मजाण्डजजरायुजोद्भिज्जसांकल्पिकसांसिद्धिकं चेति न नियमः ।' ( अ० ५ सू० १११ ) । द्रष्टव्यञ्चात्रत्यं भाष्यम् ।

**शाब्दबोधः**—शब्दप्रमाणजन्या प्रमितिः = पौरुषेयो बोधः शाब्दबोधः ।

**शुकवत्**—यथा शुकपक्षी व्याधस्य गुणे रज्जुभिर्बद्धो भवति, स्वीयैरेव वा मनोज्ञरूपमधुरशब्दरूपैर्गुणैर्निमित्तैर्बन्धनं प्राप्नोति, तथैव विवेकिजनोऽपि रागिजनसङ्गं प्राप्य तद्गुणै रागद्वेषादिभिर्बद्धो भवति । अतो रागिजनसङ्गो न कर्तव्यः । ( द्र० सां० प्र० भा० अ० ४ सू० २६ ) ।

**शेषवत्**—व्यतिरेकानुमानं शेषवत् । शेषोऽपूर्वोऽर्थोऽस्य विषयत्वेनास्तीति शेषवत्, अप्रसिद्धसाध्यकमिति यावत् । यथा, पृथिवीत्वेन इतरभेदानुमानम् । पृथिवीतरभेदो हि प्रागप्रसिद्धः । ( द्र० सां० प्र० भा० अ० १ सू० १०३ ) ।

**श्येनवत्**—यथा हि सामिषः श्येनः केनाप्यपहृत्य आमिषाद् वियोज्य दुःखी क्रियते, स्वयं चेत् त्यजति तदा दुःखाद् विमुच्यते । तथैव द्रव्याणां स्वयं त्यागेन लोकः सुखी भवति, परद्वारा वियोगेन च दुःखी भवति । अतः परिग्रहो न कर्तव्यः । ( द्र० सां० प्र० भा० अ० ४ सू० ५ ) ।

**षट्पदवत्**—पुष्पेभ्यो यथा षट्पदः सारमेवादत्ते तथैव शास्त्रगुरुभ्यः सारमेव गृह्णीयात्। (सां० द० अ० ४ सू० १३)।

**सत्कार्यवादः**—कारणव्यापारादूर्ध्वमिव कारणव्यापारात् पूर्वमपि कार्यं सदेव भवति न तु वैशेषिकादिवत् असत् इति सांख्यसिद्धान्तः। यथा तिलेष्ववस्थितस्यैव तैलस्याविर्भावो भवति, तद्वत्।

**सत्ख्यातिः**—'अत्यन्तसतः ख्यातिः सत्ख्यातिः इत्यपि न सांख्याभिमतम्। यदि गुणादयोऽत्यन्तसन्तो भासेरन् तदा विनाशकाले तेषां बाधो न दृश्येत।

**सदसत्ख्यातिः**—सदसत्ख्यातिरेव सर्वेषां गुणादीनामिति सांख्यसिद्धान्तः। कुतः? बाधाबाधभावात्। तत्र स्वरूपेणाबाधः सर्ववस्तूनां, नित्यत्वात्। संसर्गतस्तु बाधः सर्ववस्तूनां चैतन्येऽस्ति। यथा लौहित्यं स्वरूपतः क्वाचिदस्ति किन्तु संसर्गतस्तु तत् श्वेतपटे नास्ति।

न च सत्त्वासत्त्वयोर्विरोध इति शङ्कनीयम्, प्रकारभेदेनाविरोधात्। यथा हि लौहित्यं बिम्बरूपेण सत् स्फटिकगतप्रतिबिम्बरूपेण च असत् इति दृष्टम्। यथा वा रजतं वणिग्वीथिस्थरूपेण सत् शुक्त्यध्यस्तरूपेण चासत्। तथैव सर्वं जगत् स्वरूपतः सत्, चैतन्यादावध्यस्तस्वरूपेण चासदिति। एवमवस्थाभेदेनापि सदसत्त्वमविरुद्धम्। यथाहि वृक्षादिः प्ररूढाद्यवस्थाभिः सन्नपि अङ्कुराद्यवस्थाभिरसन् भवति, तथैव प्रकृत्यादिकं सदसदात्मकमिति। तदुक्तम्—

अव्यक्तं कारणं यत् तन्नित्यं सदसदात्मकम्।
प्रधानं प्रकृतिश्चेति यदाहुस्तत्त्वचिन्तकाः॥ इति।

(द्र० सां० प्र० भा० अ० ५ सू० ५६)।

**सम्बन्धः**—व्याप्तिः। तथा च सांख्यसूत्रमीश्वरप्रकरणे—सम्बन्धाभावन्नानुमानम् अ० ५ सू० ११)।

**सर्पवत्**—यथा सर्पः स्वयं गृहं न निर्माति, परगृहे एव सुखी शेते, तथैव स्वभोगार्थमारम्भो नैवकर्तव्यो योगप्रतिबन्धकत्वात्। तदुक्तम्—

गृहारम्भो हि दुःखाय न सुखाय कथञ्चन।
सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥ इति।
( द्र० सां० प्र० भा० अ० ४ सू० १२ )।

**सर्वैश्वर्यम्**—अयं सर्वैश्वर्यवाद एकेश्वरवादप्रतिरोधी सांख्याभिमतः। पुरुषाणां चितामानन्त्यात् स्वतोनित्यमुक्तत्वाच्च, अखिलभोक्तृसंयोगादेव प्रधानेन महदादिसर्जनाच्चेति। ( द्र० सां० प्र० भा० अ०५ सू० ५ )।

**साक्षी**—प्रमाता, साक्षाद्द्रष्टा। यस्मै प्रदर्श्यते विषयः स साक्षी। प्रकृतिरपि स्वविषयं पुरुषाय दर्शयतीति पुरुषः साक्षी। ( द्र० सां० त० कौ० का० १९ )। सांख्यसूत्रमपि यथा—'साक्षात् सम्बन्धात् साक्षित्वमिति ( अ० १ सू० १६१ )। अतः साक्षात्सम्बन्धाद्धेतोः पुरुषो' बुद्धेरेव साक्षी, अन्येषां तु विषयाणां द्रष्टृमात्रमस्तीति।

**सादृश्यम्**—सादृश्यं न तत्त्वान्तरम्, न वा वस्तुनः स्वाभाविकशक्तिविशेषः, किन्तु भूयोऽवयवसामान्ययोगो हि सादृश्यम्। ( द्र० सां० द० अनि० वृ० अ० ५ सू० ९४-९५ )।

संज्ञासंज्ञिसम्बन्धज्ञानहेतुः सादृश्यमिति केचिद् वदन्ति। तदपि व्यभिचारादुपेक्षणीयमेव। सादृश्याभावेऽपि उपदेशादेः संज्ञासंज्ञिसम्बन्धस्य निश्चयात्। ( द्रष्टव्यं तत्रैव सू० ९६ )।

**सामान्यम्**—अस्ति तावदेकाकारबुद्धिहेतुः सामान्यम् किन्तु अनित्यमिति सांख्यमतम् ( द्र० सां० द० अनि० वृ० अ० ५ सू० ९१-९२ )। तच्च सामान्यं नान्यापोहरूपम्, घटोऽयमिति भावत्वेन प्रतीतेः। अन्यथा 'अयं घट' इति स्थाने 'नायमघट' इत्येव प्रतीयेत। किञ्च 'अघटव्यावृत्ति' रित्यत्र अघटत्वं घटसामान्यभिन्नत्वमिति सामान्याभ्युपगम एवापतितोऽपोहवादिनां शिरसि। ( द्र० सां० प्र० भा० अ० ५ सू० ९३ )।

**सामान्यतोदृष्टम्**—पूर्ववच्छेषवदुभयभिन्नमनुमानं सामान्यतोदृष्टम्। यथा रूपादिज्ञाने क्रियात्वेन हेतुना करणवत्त्वानुमानम्। ( द्र० सां० प्र० भा० अ० १ सू० १०३ )।

अदृष्टस्वलक्षणसामान्यविषयमनुमानं सामान्यतोदृष्टमनुमानमिति वाचस्पति-मिश्राः। ( सां० त० कौ० का० ५ )।

**साम्यावस्था**—गुणानामकार्यावस्था। इयमेव स्वरूपपरिणाम इत्युच्यते।

**सांसिद्धिकम्**—स्वाभाविकम्।

**सिद्धिः**—अष्टप्रकारा भवति। तथा चोक्तं सांख्यकारिकायाम्—ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः। दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः॥ इति। ( सां० का० ५१ ) अत्र विहन्यमानस्य दुःखस्य त्रित्वात् तद्विघातास्त्रय इतीमाः मुख्यास्तिस्रः सिद्धयः। इतरास्तु तदुपायतया गौण्यः पञ्च सिद्धयः।

तत्रोहस्तर्कः—आगमाविरोधिन्यायेन आगमार्थपरीक्षणम्। इदमेव मनन-मित्याचक्षते आगमिनः। इयं सिद्धिः तारतारमित्युच्यते। शब्दः अर्थात् शब्दजनितमर्थज्ञानं द्वितीया सिद्धिः सुतारमित्युच्यते।

एवं विधिवद् गुरुमुखादध्यात्मविद्यानामक्षरस्वरूपग्रहणमध्ययनसंज्ञिका सिद्धिः तारमित्युच्यते।

न्यायेन स्वयं परीक्षितमप्यर्थं न श्रद्धत्ते यावद् गुरुशिष्यसहपाठिभिः सह न संवाद्यते। अतः सुहृदां गुरुशिष्यसहपाठिनां संवादकानां प्राप्तिः सुहृत्प्राप्तिः, सा सिद्धिश्चतुर्थी रम्यकमित्युच्यते। दानं च शुद्धिर्विवेकज्ञानस्य। शुद्धिश्च सवासनसंशयविपर्यासानां परिहारेण विवेकसाक्षात्कारस्य स्वच्छप्रवाहेऽवस्थापनम्। अत्र विवेकज्ञानरूपकार्येण तत्कारणीभूतो दीर्घकालादरनैरन्तर्य-सेविताभ्यासपरिपाकोऽपि दानपदेन संगृहीतो भवति। सेयं पञ्चमी सिद्धिः सदामुदितमुच्यते।

पूर्वोक्ताः तिस्रो मुख्याः सिद्धयः प्रमोदमुदितमोदमानसंज्ञादिभिः परिभाष्यन्ते। इत्यष्टौ सिद्धयः। ( द्र० सां० त० कौ० का० ५१ )। एषां पारिभाषिक-शब्दानां व्याख्यानान्तराण्यपि विलोकनीयानि सांख्यप्रवचनभाष्ये युक्तिदीपिकादौ चेति तत एव विस्तरोऽनुसन्धेयः।

**सूक्ष्मभूतानि**—स्थूलभूतातिरिक्तानि सूक्ष्मभूतान्यपि भवन्तीति वृत्तिकाराः। (द्र० सां० द० अनि० वृ० अ० १ सू० ६१)। एतान्येव पार्थिवादि-परमाणवः। तत्र 'आद्यहेतुता तद्द्वारा पारम्पर्येणाणुवत्।' इति सूत्रमपि प्रमाणम्। (सां० द० अ० १ सू० ७४)। गौडपादाचार्येणापि सांख्य-कारिकाभाष्ये सिद्धान्तोऽयमभ्युपगतः तदुक्तम्—पञ्चभ्यः परमाणुभ्यः पञ्चमहाभूतान्युत्पद्यन्त इति। (द्र० सां० का० भा० का० २२)। विज्ञानभिक्षुस्तु पञ्चतन्मात्राण्येव सूक्ष्मभूतानीत्याह। तदुक्तम्—स्थूल-शब्दात् तन्मात्राणां सूक्ष्मभूतत्वमभ्युपगतम् इति। (सां० प्र० भा०अ० १ सू० ६१)।

**सूक्ष्मशरीरम्**—अष्टादशभिस्तत्त्वैः सूक्ष्मशरीरमारभ्यते। इदमेव लिङ्गशरीरम्। द्रष्टव्यो लिङ्गशरीरशब्दविचारः।

**सूदवत्**—यथा पाके निष्पन्ने पाचकस्य व्यापारो निवर्तते तथैव पुरुषार्थसमाप्तौ प्रधानस्य सृष्टिर्निवर्तत इति।

**सृष्टिः**—रागनिमित्ता सृष्टिः वैराग्यनिमित्ता च मुक्तिः।

**सृष्टिप्रयोजनम्**—आत्मा स्वभावविमुक्तः, तस्याभिमानिकबन्धविमोक्षार्थं प्रधानस्य जगत्कर्तृत्वम् बन्धविमोक्षश्च हेयस्यैकविंशतिप्रकारस्य दुःखस्य हानम्। एकविंशतिप्रकारं दुःखञ्च—शरीरं, षडिन्द्रियाणि, षड्विषयाः, षड्बुद्धयः, सुखं, दुःखञ्चेति। तत्र शरीरं दुःखायतनत्वाद् दुःखम्। इन्द्रियाणि, विषया, बुद्धयश्च दुःखसाधनभावात्। सुखमपि दुःखानुषङ्गात् दुःखम्। दुःखं तु यातनापीडासन्तापात्मकं मुख्यत एव दुःखमिति। दुःखहानञ्चात्यन्तिकी दुःखोत्पत्तिनिवृत्तिः। तस्योपाय आत्मविषयकं तत्त्व-ज्ञानम्। तथा च श्रुतिः—'आत्मा वा अरे द्रष्टव्यः...... तरति शोकमात्मवित्' इत्यादिः। तस्यात्मनो विवेकज्ञानाय प्रकृतेः प्रवृत्तिरिति परार्था प्रधानस्य सृष्टिप्रवृत्तिः। स्वार्था च प्रधानस्य जगत्सृष्टिः। तथाहि, यं पुरुषं प्रत्यात्मानं विवेकेन दर्शितवती तं प्रत्युदास्ते प्रकृतिरिति। (द्र० सां० द० अनि० वृ० अ० २ सू० १)।

**सृष्टिप्रलयौ**—साम्यात् = प्रकृतेः सदृशपरिणामात् प्रलयः। तथा वैषम्यात् = प्रकृतेर्महदादिभावेन विसदृशपरिणामात् सृष्टिः तथा च सांख्यसूत्रम्—'साम्य-वैषम्याभ्यां कार्यद्वयम्' (अ० ६ सू० ४२)।

**सृष्टौ महदादीनां स्वार्थाभावः**—सृष्टिर्हि पुरुषार्था भवति अतो महदादयो न स्वार्थाय सृष्टिमारभन्ते। प्रकृतेस्तु नित्यत्वात् तस्याः स्वार्थायारम्भो युज्यते। महदादीनान्तु अनित्यत्वात् कारणलयेन नाशात् सृष्टिमात्रं न तु कश्चित् स्वार्थः। (द्र० सां० द० अनि० वृ० अ० २ सू० ११)।

**संस्कारैक्यम्**—येन संस्कारेण मानवादिशरीरभोग आरब्धः, स एक एव संस्कारः तच्छरीरसाध्यस्य समग्रप्रारब्धभोगस्य समापकः। स च भोग-समाप्तिनाश्यः, न तु प्रतिक्रियम् = प्रतिभोगव्यक्ति संस्कारनानात्वम्, कल्पना-गौरवप्रसङ्गात्। कुलालचक्रभ्रमणस्थलेऽपि एक एव वेगाख्यः संस्कारो भ्रमणसमाप्तिपर्यन्तस्थायी बोध्यो न तु वेगात् संस्कारः, संस्काराच्च पुनर्वेग इति संस्कारनानात्वमस्तीति। (द्र० सां० प्र० भा० अ० ५ सू० १२७)।

**स्थूलशरीरम्**—मातापितृभ्यां समुत्पन्नं षाट्कौशिकम्। तत्र मातृतो लोम-लोहितमांसानि, पितृतश्च स्नाय्वस्थिमज्जान इति षट्कोशाः। (द्र० सां० त० कौ० का० ३९)। गौडपादास्तु पृष्ठोदरजङ्घाकट्युरःशिरःप्रभृति-षट्कोशाः। द्रष्टव्यमुक्तकारिकाया भाष्यम्।

**स्फोटः**—प्रत्येकवर्णेभ्योऽतिरिक्तं 'कलश' इत्याकारकमखण्डमेकपदं स्फोट इति वैयाकरणैर्योगैश्चाभ्युपगम्यते। यथा कम्बुग्रीवाद्यवयवेभ्योऽतिरिक्तो घटा-द्यवयवी प्रतीयते स च शब्दविशेषः पदाख्योऽर्थस्फुटीकरणात् 'स्फोट' इत्युच्यते।

स च स्फोटात्मकः शब्दो न सांख्यैरभ्युपगम्यते। यतो हि स स्फोटः प्रतीय-मानः सन् अर्थं प्रत्याययति उताप्रतीयमानः सन्? आद्ये सा स्फोटप्रतीतिर्न श्रावणप्रत्यक्षरूपा, अननुभवात्, किन्तु अभिव्यक्तिरूपैव स्वीकार्या। एवञ्च

येन वर्णसमुदायेनानुपूर्वीविशेषविशिष्टेन स्फोटोऽभिव्यज्यते, तस्यैवार्थप्रत्यायकत्वमस्तु, किमन्तर्गड्डुना स्फोटेन ? द्वितीये तु अज्ञातस्फोटस्य नास्त्यर्थप्रत्यायनशक्तिरिति व्यर्था स्फोटकल्पनेति। ( द्र० सां० प्र० भा० अ० ५ सू० ५७ )।

**स्वकर्म**—स्वाश्रमविहितकर्मानुष्ठानम् ।

**स्वतः प्रामाण्यम्**—वेदानां स्वाभाविकी या यथार्थज्ञानजननशक्तिः, तस्या मन्त्रायुर्वेदादावुपलम्भात् समस्तवेदानां स्वत एव प्रामाण्यं न तु वक्तृयथार्थज्ञानाधीनम् । ( द्र० सां० प्र० भा० अ० ५ सू० ५१ )।

अनिरुद्धोऽपि आह—निजशक्तिज्ञानजनकसामग्रीमात्राधीनं प्रामाण्यं न तु अधिकं गुणमपेक्षते नैयायिकवत् । इदमुत्पत्तिपक्षे। ज्ञप्तिपक्षेऽपि—औत्सर्गिकी ज्ञानग्राहकाणां प्रामाण्यबोधशक्तिः। अप्रामाण्यन्तु परतः, तत्र दोषस्यापि कारणत्वात् । ( द्र० सां० द० अनि० वृ० अ० ५ सू० ५१ )

**स्वरूपं न शक्तिः**—यदि स्वरूपं शक्तिस्तदा 'शक्तो मल्ल' इत्युक्तौ पुनरुक्तदोषः स्यात् देवदत्तो देवदत्त इतिवत् । तथा शक्तो मन्त्र इति विशेषणमनर्थकं च स्यात् । तथा च निजा चासौ शक्तिश्चेति निजशक्तिः न तु स्वरूपमेव शक्तिरिति सिद्धान्तः । ( द्र० सा० द० अनि० वृ० अ० ५ सू० ३३, ३४, ३६ )।

**स्वालक्षण्यम्**—स्वं स्वं लक्षणम् = असाधारणीवृत्तिः अध्यवसायाभिमानसङ्कल्परूपा येषां तानि स्वलक्षणानि महदहङ्कारमनांसि, तेषां भावः स्वालक्षण्यम् । तदेव स्वं स्वं लक्षणमध्यवसायादिरूपं महदहङ्कारमनसां वृत्तिरस्तीति। ( द्र० सां० त० कौ० का० २९ )।

**हंसक्षीरवत्**—यथा दुग्धजलयोरेकीभावमापन्नयोर्मध्येऽसारजलत्यागेन सारभूतक्षीरोपादानं हंसस्यैव भवति न तु काकादेः। तथैव विरक्तस्यैव हेयानां प्रकृत्यादीनां हानम्, उपादेयस्य चात्मन उपादानं संभवति नाविरक्तस्य। ( द्र० सां० प्र० भा० अ० ४ सू० २३ ) इति शिवम् ।

सारण्यमण्डले पुण्ये ग्रामे विष्णुपुराऽभिधे ।
जनिंस्त्रिपाठिनो लब्ध्वा रामादेर्यो विहारिणः ॥
न्यायव्याकरणे श्रीमत्सूर्यनारायणाद् गुरोः ।
वेदान्तं विश्रुताच्छ्रीमद्धरिहरकृपालुतः ॥
श्रुत्वा वादविदग्रणीः स विदितः केदारनाथः कृती ।
सांख्याभीष्टरहस्यमत्र प्रकटीकर्तुं समीहाभृतः ॥
शून्याग्न्यभ्रकलोचनैः परिमिते संवत्सरे वैक्रमे ।
माघे मासि सिते ह्यपूरयदिमं कोशं मुदा कापिलम् ॥

इति श्रीमदाचार्यकेदारनाथत्रिपाठिप्रणीतः सांख्यकोशः पूर्णः ।

स्मृतिमात्रेण शेषेषु पादपद्मेषु पूज्ययोः ।
पित्रोर्योगपदाब्जानां कोशोऽप्येष समर्प्यते ॥

# प्रस्तावना

अथायं प्रस्तूयते पातञ्जलदर्शनोपजीव्योऽभिनवो योगकोशोऽपि मया विदुषां प्रमोदाय जिज्ञासुजनकल्याणाय चेति स्वमनसि महत्सन्तोषमनुभवन्नस्मि । योगशास्त्रस्यापि चतुर्दशविद्यान्तर्गतत्वं साङ्ख्यशास्त्रवदेवास्ति, "अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश ॥" इत्यत्र न्यायविस्तरपदेनास्यापि संगृहीतत्वादिति मन्तव्यम् ।

साङ्ख्ययोगशास्त्रयोर्भिन्नप्रवक्तृकत्वेऽपि बाला एव केचन साङ्ख्ययोगौ पृथगिति वदन्तीति भगवद्गीतायां स्पष्टमुक्तम् । वस्तुतस्तु परस्परपूरकत्वमेवानयोः शास्त्रयोर्वरीवर्ति । कथमन्यथा निःसाधनं साङ्ख्यज्ञानमुत्पत्तुमपि प्रभवेत्, निर्लक्ष्यो वा योग आश्रीयेत केनापि सचेतसेति विभावयामः । अतः साध्यसाधनयोरिव घनीभूतः सम्बन्धः साङ्ख्ययोगयोरप्यस्ति । अतएव च सांख्ययोगयोरेकतरमन्यतरस्मात् पृथक् कर्तुमशक्यमेव । योगसूत्रेषु योगभाष्ये च यथा भोगापवर्गयोर्बन्धमोक्षयोः, बुद्धिसत्त्वपुरुषयोश्च वर्णनं वरीवर्ति, तत्सर्वं साङ्ख्यमेवास्तीति । वस्तुगत्या योगेऽपि साङ्ख्यस्यैवोद्देश्यविधया प्राधान्यं दृश्यते । अत एव योगो नात्मानं साङ्ख्यात् पृथक्कर्तुमर्हतीति । एतज्ज्ञानार्थं पातञ्जलयोगदर्शनस्य तृतीयपादस्य पञ्चविंशसूत्रस्य भाष्यादिकमवलोकनीयमस्ति । अतो योगकोशमन्तरेकलः साङ्ख्यकोशोऽपूर्ण एवेति योगकोशप्रणयनेऽपि समयव्यवधानमविधाय प्रवृत्तः ।

यद्यप्यन्यैरपि बहुभिर्योगमर्मज्ञैर्योगसम्बन्धिनो नैके स्वतन्त्रग्रन्था अपि विरचिताः समुपलभ्यन्ते, तथापि व्याकरणन्यायवेदान्तादिशास्त्रसमक-

क्षतायां साङ्ख्यशास्त्रवदेव योगशास्त्रस्यापि ग्रन्थसम्पत्तिर्न तावती भूयसीति न विदुषां तिरोहितमेतत् । एवं सत्यपि योगभाष्यतत्त्ववैशारदीयोगवार्तिकप्रभृतयो ग्रन्था योगशास्त्रसिद्धान्तविज्ञानाय पर्याप्ताः सन्तीति नात्र सन्देहलेशोऽपि । एतेष्वपि योगभाष्येणैव संक्षेपेण सर्वोऽपि योगविषयः प्रायेण कवलीकृत इति तदीयविशदव्याख्यान एव प्रयतमाना दृश्यन्ते तत्त्ववैशारदीकारा विवरणकारा योगवार्तिककाराश्चेति तेषां व्याख्यानप्रामाणिकतामनुरुध्यैव कोशोऽयं मया निरमायि । अन्ये च वृत्तिकारादयः प्रायस्तानेवानुसरन्तीति तत्तत् स्थलेषु मया निरदेशि । वाचस्पतिमिश्रविज्ञानभिक्षुव्याख्यानयोर्भेदोऽपि क्वचिद् दृश्यमानोऽधीतिजनबुद्धिवैशद्यायैव कल्पेतेति मन्ये ।

## योगशास्त्रस्य प्रवर्तकः

यद्यपि हिरण्यगर्भ एव योगस्याद्यो वक्तेति "हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः" इयि वचनात् प्रसिद्धिरस्ति, तथापि योगस्य शास्त्ररूपेण प्रवर्तको महर्षिः पतञ्जलिरेवेत्यत्र नास्ति सन्देहः ।

स चायं पतञ्जलिः कः ? कांश्चासौ भुवमलञ्चकार ? काश्च तस्य कृतय इति विषयेऽस्ति महान् विसंवादो विदुषाम् । अपतत् अञ्जल्यां यः स पतञ्जलिः, अथवा अञ्जलिर्नमस्यतयाऽपतद् यस्मै स पतञ्जलिरिति पतञ्जलिशब्दस्य द्वेधा व्युत्पत्तिः । अत्रत्यं कथानकञ्चान्यतोऽनुसन्धेयम् ।

पतञ्जलिनामानः पञ्चाभूवन्निति दामोदरप्रसादशर्मा प्रतिपादयति । तद्यथा—महर्षिपतञ्जलिः, मुनिपतञ्जलिः, आचार्यपतञ्जलिः, कोशकारपतञ्जलिः, महामुनिपतञ्जलिश्चेति । तदनुसारमाद्यो महर्षिपतञ्जलिर्वर्तमानकालात् पञ्चसहस्रवर्षपूर्ववर्ती शुक्लयजुर्वेदस्य पातञ्जलशाखाया द्रष्टा, निदानसूत्रस्य वैदिकग्रन्थस्य च रचयिताऽभूत् । कतिपय-

विदुषां मतमस्ति—चरकसम्प्रदायवत् शङ्कराचार्यसम्प्रदायवच्च पातञ्जलसम्प्रदायोऽप्यासीत्, यस्य वर्णनं बहुकालानन्तरं पाणिनिना पातञ्जलशब्दोल्लेखेन कृतम्, तदुपरि महाभाष्यकारेण च लिखितम्—पातञ्जलाः = पतञ्जलेः शिष्यसम्प्रदाय इति। द्वितीयो मुनिपतञ्जलिर्वर्तमानसमयात् त्रिसहस्रवर्षपूर्वं काश्मीरे मद्रदेशेऽभूत्। तेन नवमेकं दर्शनशास्त्रमाविष्कृतं दर्शनसम्बन्धिग्रन्थद्वयञ्च निर्मितम्—परमार्थसारः पञ्चाशती चेति। अस्मादारुणिरुद्दालको ज्ञानमग्रहीदित्युल्लेखो 'बृहदारण्यकोपनिषदि वर्तते। ( ३।७।१ ) वेदानां मननान्मुनिरिति। तृतीय आचार्यपतञ्जलिरितः पञ्चदशशतवर्षपूर्वं जातः कश्चिद्रसायनाचार्यः। अस्य लौहशास्त्ररसशास्त्रादयोऽनेके रसग्रन्थाः सन्ति। चतुर्थः कोशकारपतञ्जलिर्योऽभिधानचिन्तामणौ प्रामाण्यं वासुकेरिति निर्दिष्टः। अमरकोशेऽप्यस्योदाहरणानि दत्तानि सन्ति। पञ्चमो महामुनिपतञ्जलिर्यो महाभाष्ययोगदर्शनयो रचयिता चरकसंहितायाश्च प्रतिसंस्कर्तेति। अयमेव "योगेन चित्तस्य पदेन वाचां मलं शरीरस्य तु वैद्यकेन। योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि" इति पद्ये निर्दिष्टः। अयञ्च राज्ञः पुष्यमित्रस्य समकालीनः इत्यत्र "पुष्यमित्रं यजामहे, पुष्यमित्रं याजयामः" इति महाभाष्यं प्रमाणीकरोति। अयमेव चरकसम्प्रदायानुयायितया चरकः पातञ्जलशिक्षासंस्थानस्याचार्यतया च पतञ्जलिरित्याख्यातः। अस्य वास्तविकं नाम जय इति, माता चास्य जया पिता च विजय इत्यासीत्। अयं काश्मीरनिवासी कात्यायनस्य पालितः पट्टशिष्य आसीत्। शेषस्य सर्वाणि नामान्यस्य पर्यायाणि मन्यन्त इति।

नागेशभट्टानुसारं गोनर्द ( सरस्वती ) तीरे तपस्यत ऋषेरञ्जलौ पतनात् पतञ्जलिरिति नामाभूत्। स च ऋषिः कात्यायन एव गोनर्दीयः

---

१. टि० बृहदारण्यकोपनिषदि पतञ्चल इति नाम दृश्यते न पतञ्जलिरिति ध्येयम्।

पतञ्जलेः पालको गुरुश्चासीत्। महाभाष्ये उक्तम्—गोनर्दीयस्त्वाहेति।
( ३।२।११८ )। ( शब्देन्दुशेखरः पृ० २ )।

## पतञ्जलेर्जन्मस्थानम्

अस्य मुनेः स्थानसम्बन्धे "गोनर्दीयस्त्वाहे" तिकथनात् गोनर्ददेशवासी अयमिति। स च गोनर्ददेशोऽद्यतनो 'गोण्डा' इति निश्चिनोति श्रीरामकृष्णगोपालभण्डारकरः। ( रसयोगसागर पृ० २० ) किन्त्विदं कथनं न बुद्धिमारोहति। यतो महाभाष्यकार आत्मनः कृते "गोनर्दीय" इति नाह किन्तु वार्तिककारस्यैव कृते तदाह। पतञ्जलिस्तु पुष्यमित्रं यजामहे, चन्द्रगुप्तसभेत्यादिकथनात् पाटलिपुत्रवासीति प्रतीयते।

केचित्तु "काश्मीरात् गमिष्यामो देवदत्त! तत्र सक्तून् पास्यामः, अभिजानासि देवदत्त! यत् काश्मीरेषु वत्स्यामः" इति महाभाष्यवचनात् काश्मीरवासीति कथयन्ति। किन्तु मथुरापाटलिपुत्रयोः विशेषेण चर्चादर्शनात्, काश्मीरसम्बन्धे भविष्यत्कालप्रयोगाच्च पाटलिपुत्रवास्येव पतञ्जलिर्न काश्मीरवासीति निश्चिन्वन्ति।

## कालः

"पुष्यमित्रं यजामहे, चन्द्रगुप्तसभा" इत्यादिप्रयोगात् १५० ई० वर्षपूर्वं पतञ्जलिरभूत् इत्याह दामोदरप्रसादशर्मा। किन्तु यदि तन्मते चरकपतञ्जली अभिन्नौ तदा ई० पू० १५० तमे वर्षे विद्यमानः स ततः पश्चाद् द्विशतवर्षानन्तरं कनिष्कस्य राजवैद्यः कथङ्कारं भवितुमर्हति? एतदर्थं २५०-३०० वर्षाणि यावद् योगबलात् सोऽजीवदिति मन्यते शास्त्री।

किन्तु पतञ्जलिसम्बन्धिन उक्तविचाराः महाभाष्यकारपतञ्जलिसम्बन्धिन एव वर्तन्ते। त एव विचारा योगसूत्रकारपतञ्जलिसम्बन्धेऽपि घटन्त इति तु निर्णयस्तावदवशिष्यत एव यावत्तयोरैक्यं न निर्णीतं भवेत्।

अत्रोदयवीरशास्त्री प्रतिपादयति—एक एव विद्वान् व्याकरणमहाभाष्यं योगदर्शनञ्च रचितवानिति कथनं सर्वथा निर्युक्तिकम् । एतदनुसारं वेदान्तदर्शने "एतेन योगः प्रत्युक्तः" इति सूत्रेण पातञ्जलयोगस्योल्लेखः कृतः अतो वेदान्तसूत्रकारात् व्यासाद् बहुपूर्वं योगसूत्रकारः पतञ्जलिरभूद् यदा तु महाभाष्यकारः पतञ्जलिर्विक्रमादित्यात् केवलं वर्षशतद्वयपूर्वमेवाभूदिति । अत उभौ पतञ्जली भिन्नावेवेति ।

उभयोः पतञ्जल्योरैक्यसमर्थकास्तु समादधति यदुक्तसूत्रे योगसामान्यमेवाभिप्रेतम् न तु पातञ्जलो योगः । अतो महाभाष्यकारपतञ्जलिरेव योगसूत्रकारपतञ्जलिरिति ।

भोजदृष्टौ अहिपतिशेषनागावतारभूतः पतञ्जलिर्योगसूत्राणां रचयिता । स एव व्याकरणमहाभाष्यरचयिता चरकसंहितायाः प्रतिसंस्कर्ता चास्ति ।

चरकसंहिताटीकाकारश्चक्रपाणिराह—

पातञ्जलमहाभाष्यचरकप्रतिसंस्कृतैः ।
मनोवाक्कायदोषाणां हन्त्रेऽहिपतये नमः ॥ इति ।

कायवाग्बुद्धिविषया ये मलाः समवस्थिताः ।
चिकित्सालक्षणाध्यात्मशास्त्रं तेषां विशुद्धये ॥

( वाक्यपदीयं ब्रह्मकाण्डम् )

इति चरके पतञ्जलिः" ( नागोजीभट्टः )

"सूत्राणि योगशास्त्रे वैद्यकशास्त्रे च वार्तिकानि ततः ।
कृत्वा पतञ्जलिमुनिः प्रचारयामास जगदिदं त्रातुम् ॥"

( इतिपतञ्जलिचरिते रामभद्रदीक्षितः )

इत्येवमादीनि वचनान्येवाधृत्य त्रीनपि पतञ्जलीनेकत्वेनाध्यवस्यन्ति बहवो विद्वांसः ।

इदमप्येकं मतं वर्तते यच्चरकः शेषनागस्यावतारोऽभूत् । एतदाधारेण कतिपयविदुषामनुमानमस्ति यत् स नागजातीयः कश्चिदार्य आसीत् । पतञ्जलिरपि शेषावतारो मन्यते । अतश्चरकः पतञ्जलिरेवेति तेषां मतम् । अस्मात् कारणात् चरकस्य पतञ्जलित्वं साधयन्तस्ते योगसूत्रकारस्य महाभाष्यकारनामसाम्यात् पतञ्जलित्वं स्फुटमिति कृत्वा ते कथयन्ति यत् पतञ्जलिरेव चरको नान्यस्तथा योगसूत्राणां चरकसंहितायाः महाभाष्यस्य च रचयिता एक एव पतञ्जलिरासीदिति ।

इत्थं पतञ्जलेरेकत्वानेकत्वविसंवादे आचार्यप्रियव्रतशर्माणः स्वीये चरकचिन्तने उभयपक्षसमर्थिकाः युक्तीः समुपस्थापयन्तः बहुषु स्थलेषु महाभाष्यकारेण सह चरकयोगसूत्रकारयोरेकत्वसमर्थकं साम्यं प्रदर्श्य षड्भिर्हेतुभिर्महाभाष्यकारचरकयोः पञ्चभिश्च हेतुभिः योगसूत्रकारचरकयोर्वैभिन्न्यं साधितवन्तः । आयुर्वेदस्य बृहदितिहासेऽत्रिदेवो लिखति—योगसूत्रमहाभाष्ययोः रचयिता एक एव पतञ्जलिरिति नास्ति निश्चय इति । पृ० ४७५

अपरे च कथयन्ति—महाभाष्येऽनेकशब्द एकवचनान्त एव स्वीकृतो दृश्यते नञ् सूत्रभाष्ये, किन्तु "प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम्" इति योगसूत्रे बहुवचनान्तप्रयोगो वर्तते । अयं शब्दप्रयोगभेदः पतञ्जलिभेदं गमयति । एवं वैद्यके वा योगे वा व्याकरणे वा कस्मिन्नपि प्राचीनग्रन्थे त्रयाणामैक्यसङ्केतो नासाद्यते । न वा वाचस्पतिमिश्रादिवत् स्वकृतित्वेनान्यतमस्मिन् ग्रन्थे अन्यतमस्य ग्रन्थस्य स्वयं पतञ्जलिना कृतः क्वचिदुल्लेखो दृश्यते ।

अस्यां स्थितौ प्रवादपारम्पर्येण त्रयाणामेकत्वं तत्र प्रबलप्रमाणाभावेन चानेकत्वमध्यवसीयते विभिन्नविद्वद्भिः । वस्तुतः त्रयाणां महाभाष्ययोगसूत्रचरकसंहिताग्रन्थानां कालनिर्णयोऽपि पतञ्जलेरैक्यानैक्यनिर्णये सहायको भवितुमर्हतीति स्वतन्त्ररूपेण पूर्वं तेषां ग्रन्थानां कालनिर्णयोऽपेक्षितोऽस्तीति एतस्मिन् विषये कदाचिद् विचारयिष्यते ।

योगसूत्रेषु व्यासभाष्यं वेदान्तसूत्रेषु शारीरकभाष्यवदेवातिगभीरं साकल्येन योगसिद्धान्तप्रतिपादकञ्चास्ति। तदुपरि षड्दर्शनारण्या-नीपञ्चाननानां श्रीमद्वाचस्पतिमिश्राणां यथार्थनाम्नी तत्त्ववैशारदीटीका नूनं शारीरकभाष्योपरि तदीयभामतीव सुविशदा भाष्यगभीराशयाभि-व्यञ्जिका प्राञ्जला च विराजत इति महदुपकृतमस्य शास्त्रस्य तैरिति मन्यामहे। योगमर्मज्ञानां विज्ञानभिक्षूणां योगवार्तिकमपि महत्त्वपूर्ण-प्रमाणनिचयरवचितं क्वचित् स्वतन्त्रविचारभरितञ्चास्तीति भाष्यस्य सोऽप्यपूर्वो व्याख्याग्रन्थ उपलभ्यते। क्वचित् क्वचिद् वाचस्पतिमिश्राणां विरोधोऽपि तेन कृत इति तस्य युक्तत्वायुक्तत्वे पृथगेव विचारणीये।

योगभाष्यस्योपरि श्रीमद्भगवत्पादेन शङ्कराचार्येण निर्मितं विवरण-मप्युपलभ्यते। अयमाद्य एव शङ्कराचार्य इति बहवो विद्वांसोऽभ्युपयन्ति।

अन्यानपि च नागेशभट्टप्रभृतिनिर्मितान् वृत्तिग्रन्थान् योगमञ्जरी-योगचिन्तामणि-हठयोगप्रदीपिका—योगवाशिष्ठादिग्रन्थान् च सन्दर्भरूपेण समाश्रित्य कोशोऽयं मया निरमायि। अन्ते च 'आपरितोषाद् विदुषां न साधु मन्ये प्रयोगविज्ञानम्" इति कालिदासीयं पद्यं स्मरन् अयमपरोऽपि मत्प्रयासो यदि विदुषां सन्तोषाय जिज्ञासुजनलाभाय च भवेच्चेदात्मनः प्रयासस्यास्य साफल्यं मन्य इति शिवम्।

विदुषामाश्रव :—

**केदारनाथत्रिपाठी**

( दर्शनविभागाध्यक्षः )

काशीहिन्दूविश्वविद्यालयः

वाराणसी

जुलाई, १९७४

# सङ्केताः

द्र० = द्रष्टव्यम् ।
पा० सू० = पादः, सूत्रम् ।
त० वै० = तत्त्ववैशारदी ।
यो० वा० = योगवार्तिकम् ।
यो० द० = योगदर्शनम् ।
यो० भा० = योगभाष्यम् ।
पा० सू० वृ० = पातञ्जलसूत्रवृत्तिः ।
पा० यो० सू० भा० वि० = पातञ्जलयोगसूत्रभाष्यविवरणम् ।
यो० म० का० = योगमञ्जरीकारिका ।
यो० सू० म० प्र० वृ० = योगसूत्रमणिप्रभावृत्तिः ।
पा० द० भो० वृ० = पातञ्जलदर्शनभोजवृत्तिः ।
यो० भा० वि० = योगभाष्यविवरणम् ।
पा०यो० सू० भो० वृ० वि० पा० = पातञ्जलयोगसूत्रभोजवृत्ति-विभूतिपादः ।
ह० यो० प्र० उप० श्लो० = हठयोगप्रदीपिका–उपदेशः–श्लोकः ।
वा० पु० = वायुपुराणम् ।
पृ० = पृष्ठम् ।
यो० चि० प० = योगचिन्तामणिः परिच्छेदः ।
यो० सू० = योगसूत्रम् ।
यो० भा० त० वै० = योगभाष्यतत्त्ववैशारदी ।
यो० भा० तथा वा० = योगभाष्यम् तथा वार्तिकम् ।
पा० सू० वृ० = पातञ्जलसूत्रवृत्तिः ।

॥ श्रीगणेशाय नमः ॥

# योगकोशः

नमः सूत्रप्रणेतृभ्यो भाष्यकृद्भ्योऽपि भूरिशः।
विधाय योगशास्त्रस्य प्रणये कोशमिष्टदम् ॥

**अङ्गमेजयत्वम्**—यदङ्गानि एजयति = कम्पयति तस्य भावोऽङ्गमेजयत्वम् सर्वाङ्गीणो वेपथुः।

**अणिमादयः**—अणिमा, लघिमा, महिमा, गरिमा प्राप्तिः, प्राकाम्यम्, वशित्वम्, ईशितृत्वम् इत्येतान्यष्टौ ऐश्वर्याणि।

**अतीतानागतज्ञानम्**—धर्मलक्षणावस्थारूपपरिणामत्रये संयमात् = धारणाध्यानसमाधिरूपात् योगिनामतीतानागतज्ञानं भवतीति योगभाष्यम् ( द्र० पा० ३ सू० १६ )।

अत्राहुर्वाचस्पतिमिश्राः—परिणामत्रयं साक्षात्क्रियमाणं तेषु परिणामेष्वनुगते ये अतीतानागते, तद्विषयं ज्ञानं सम्पादयति। परिमाणत्रयसाक्षात्करणमेव तदन्तर्भूतातीतानागतसाक्षात्करणात्मकमिति संयमसाक्षात्कारयोर्न विषयभेदापत्तिरिति। (द्र०त०वै०पा० ३ सू० १६)।

विज्ञानभिक्षुस्तु—संयमसाक्षात्कारयोर्विषयभेदेऽपि न काप्यसङ्गतिः। अन्यविषयकसंयमात् प्रतिनियतपदार्थान्तरसाक्षात्कारश्च योगजधर्मबलाद् भवतीति शास्त्रप्रामाण्यादवधार्यते, धर्मविशेषात् स्वर्गविशेषवत्, तपोजन्यसिद्धिवत्, भुवनज्ञानं सूर्ये संयमादिति सिद्धिवच्चेत्याह। ( द्र० यो० वा० तत्रैव )।

**अथ**—"अथ योगानुशासनम्" इति सूत्रगतस्य अथेति शब्दस्य अधिकारोऽर्थः। तथा च भाष्यम्—'अथेत्ययमधिकारार्थः' इति।

तेन योगानुशासनं शास्त्रमधिकृतं वेदितव्यमिति सूत्रार्थः सम्पद्यते। अधिकारश्च आरम्भणम्, अधिकारशब्दस्य योगरूढतया आरम्भण एव मुख्यत्वात्। अतोऽत्र योगशास्त्रस्याधिकार्यत्वम् = आरम्भणीयत्वं मुख्यमेवास्तीति विज्ञानभिक्षुः। वाचस्पतिमिश्रैः सूत्रस्याथशब्दस्याधिकारार्थत्वे दृष्टान्त उक्तः "अथैष ज्योतिरितिवत्" इति। यद्यप्यत्र दृष्टान्ते ज्योतीरूपस्यार्थस्याधिकार्यत्वं मुख्यं न संभवति अर्थस्यानधिकार्यत्वात्, तथापि अधिकार्यशास्त्रविषयतया तत्र गौणमधिकार्यत्वमस्त्येवेति तस्य दृष्टान्तत्वमुपपद्यत एवेत्याशयः

अधिकारार्थोऽप्ययमथशब्दोऽन्यार्थं नीयमानोदकुम्भ इव दर्शनेन श्रवणमात्रेण मङ्गलायापि कल्पते। ( द्रष्टव्ये योगवार्तिकतत्त्ववैशारद्यौ यो०द०पा० १ सू० १) वृत्तिकारोऽप्याह—अथ शब्दोऽधिकारद्योतको मङ्गलार्थकश्चेति। (द्र० यो० सू० भो० वृ० पा० १ सू०१)।

अदृष्टजन्मवेदनीयः कर्माशयः—पुण्यापुण्यकर्माशयो लोभमोहक्रोधप्रभवः। स दृष्टजन्मवेदनीयश्चादृष्टजन्मवेदनीयश्च भवति। अस्मिन्नेव जन्मनि फलदानाय परिपच्यमानः कर्माशयो (धर्माधर्मौ) दृष्टजन्मवेदनीयः। भविष्यज्जन्मनि च फलदानाय परिपक्ष्यमाणः कर्माशयो (धर्माधर्मौ) अदृष्टजन्मवेदनीयो भवति। तत्र तीव्रसंवेगेन मन्त्रतपःसमाधिभिर्निष्पादितः ईश्वरदेवतामहर्षिमहानुभावानामाराधनाद् वा परिनिष्पन्नो यः पुण्यकर्माशयः स सद्यः (इहैव जन्मनि) परिपच्यते। यथा नन्दीश्वरः कुमारो मनुष्यपरिणामं हित्वा देवत्वेन परिणतः। एवं तीव्रक्लेशेन भीतव्याधितकृपणेषु विश्वासोपगतेषु वा महानुभावेषु वा तपस्विषु कृतः पुनः पुनरपकारोऽपि पापकर्माशयोऽधर्मरूपः सद्य एव परिपच्यते। यथा नहुषो देवानामिन्द्रोऽपि स्वकं परिणामं हित्वा तिर्यक्त्वेन (सर्पत्वेन) परिणतः। इति दृष्टजन्मवेदनीयकर्माशयोदाहरणे। एवं कुम्भीपाकादिनरकभेदप्रापको नारकाणां कर्माशयोऽदृष्टजन्मवेदनीयः।

न हि मनुष्यशरीरेण तत्परिणामभेदेन वा सा तादृशी वत्सरसहस्रादि-निरन्तरोपभोग्या वेदना सम्भवतीत्यदृष्टजन्मवेदनीयः स नारकाणां कर्माशयः। द्रष्टव्यं योगभाष्यं तत्रत्या तत्त्ववैशारदी च ( पा० २ सू० १२ )।

**अधिमात्रतीव्रः**—अधिमात्रोपाया योगिनोऽपि त्रिधा भवन्ति, मृदुतीव्रसंवेगो, मध्यतीव्रसंवेगोऽधिमात्रतीव्रसंवेगश्चेति। एषु यस्तृतीयोऽधिमात्रतीव्रसंवेगस्तस्य तु अधिमात्रोपायस्य सतः आसन्नतमः समाधि लाभो भवतीति। एवंविधो योगी अधिमात्रो-पायत्वे सति अधिमात्रतीव्रः = अर्थात् अधिमात्रतीव्रसंवेग इत्युच्यते। ( द्र० यो० भा० पा० १ सू० २२ )।

**अधिमात्रोपायः**—उपायाः श्रद्धा-वीर्यं स्मृतिः समाधिः प्रज्ञा चेति पञ्च सन्ति असंम्प्रज्ञातसमाधिसिद्धेः। तत्र प्राग्भवीयसंस्कारा-दृष्टवशाद् येषां योगिनां श्रद्धाद्याः प्रज्ञान्ता उपाया अधिमात्रा-भवन्ति, तेऽधिमात्रोपाया योगिनः कथ्यन्ते। एवमेव केचिन्मृदूपायाः केचिच्च मध्योपाया भवन्ति योगिनः।

**अनन्तसमापत्तिः**—आसननिष्पत्तिकारणमनन्तसमापत्तिः। यथा च स्वाभाविकप्रयत्नशैथिल्यमासनसिद्धिहेतुस्तथैवानन्ते नागनाथे स्थिरतर-फणासहस्रविधृतविश्वंभरामण्डले समापन्नं तद्धारणया तदात्मतापन्नं चित्तमासनं निष्पादयति। ( द्र० यो० भा० त० वै० पा० २ सू० ४७ ); तच्च तदनुग्रहात् सजातीयभावनावशादहृष्टवशाद्वेति विज्ञानभिक्षुर्नागेशभट्टश्चेति। (द्र० यो० वा० तथा पा० सू० वृ० पा० २ सू० ४४) आकाशादिगते आनन्त्ये चेतसः समापत्तिरनन्त-समापत्तिरितिभोजदेवः।

**अनुमानम्**—अनुमेयस्य तुल्यजातीयेष्वनुवृत्तो भिन्नजातीयेभ्यो व्या-वृत्तः सम्बन्धो यस्तद्विषया सामान्यावधारणप्रधाना वृत्तिरनुमानम् इति योगभाष्यम्। व्याख्यातं चैतद् वाचस्पतिमिश्रैः, यथा जिज्ञा-

सितधर्मविशिष्टो धर्मी अनुमेयः तस्य तुल्य जातीयाः सपक्षाः, तेष्वनुवृत्तः, तथा विभिन्नजातीयेभ्योऽसपक्षेभ्यो ( विपक्षेभ्य इति यावत् ) व्यावृत्तो यः सम्बन्धो = लिङ्गम्, सम्बध्यते इति सम्बन्ध इति व्युत्पत्तेः। एवंविधलिङ्गविषया = लिङ्गनिबन्धना या सामान्यावधारणप्रधाना वृत्तिः सा अनुमानमित्यर्थः। ( द्र० यो० भा० त० वै० पा० १ सू० ७ )।

**अनेकं कर्म एकस्य जन्मनः कारणम्**—जन्ममरणान्तराले कृतः पुण्यापुण्यकर्माशयप्रचयो विचित्रः ( अनेकः ) प्रधानोपसर्जनभावेनावस्थितो मृत्युनाऽभिव्यक्तोऽर्थात् मरणकाले प्रारब्धकर्मभोगसमाप्त्या लब्धावसरः सन् एकप्रघट्टकेन मिलित्वा मरणं प्रसाध्य जन्मादिरूपे कार्ये कर्तव्ये एकलोलीभावमापन्नः एकमेव जन्म करोति, नानेकम्। अतो ऽनेकं कर्म मिलित्वा एकस्य जन्मनः कारणमिति सिद्धान्तः। ( द्र० यो० भा० त० वै० तथा यो० वा० पा० २ सू० १३ )।

**अन्तरायाः**—व्याधिः, स्त्यानम् ( अकर्मण्यता चित्तस्य ), संशयः, प्रमादः, आलस्यम्, अविरतिः ( चित्तस्य विषयसंसर्गजन्या तृष्णा ), भ्रान्तिदर्शनम् ( विपर्ययज्ञानम् ), अलब्धभूमिकत्वम् ( मधुमत्यादिसमाधिभूमीनामेकतमस्या अपि साधनानुष्ठानेऽप्यलाभः ), अनवस्थितत्वम् ( लब्धायां भूमौ चित्तस्याप्रतिष्ठितत्वम्। चित्तेऽप्रतिष्ठिते तु समाधिभ्रेषःस्यात्ततः तस्या अपि भूमेरपायः स्यात्। अतः समाधिप्रतिलम्भे चित्तमवस्थितं कर्तुं प्रयतितव्यम् साधकेनेति )। इत्थं नवान्तराया भवन्ति योगस्य। एते एव चित्तविक्षेपा इति, योगमला इति, योगप्रतिपक्षा इति च कथ्यन्ते। (द्र० यो० भा० त० वै० पा० १ सू० ३०)।

**अन्तःकरणस्य विभुत्वम्**—बुद्धिसत्त्वं हि भास्वरमाकाशकल्पमिति वदता भाष्यकारेणान्तःकरणस्य वैकारिकाहङ्कारजन्मनः सत्त्वबहु-

ल्लतया ज्योतीरूपता विवक्षिता तत्तद्विषयगोचरतया चाकाशवद् विभुत्वमप्यस्तीति। बुद्धिरत्र मनोऽभिप्रेतम् न तु महत्तात्त्वम्। सा बुद्धिरेव सत्त्वबहुलतया बुद्धिसत्त्वमिति गीयते। (द्र० यो० भा० त० वै० पा० १ सू० ३६)। अत्रत्यं योगवार्तिकमप्यनुसंधेयम्।

**अन्तर्धानम्**—रूपरसगन्धस्पर्शशब्दपञ्चकात्मको हि कायः। तत्र यदा कायस्य रूपे संयमविशेषो योगिना क्रियते तदा रूपस्य ग्राह्यताशक्तिः रूपवत्कायप्रत्यक्षताहेतुः स्तभ्यते। तस्माद् ग्राह्यशक्तिस्तम्भे सति योगिनोऽन्तर्धानं = परकीयचक्षुर्जन्यज्ञानाविषयत्वं भवतीति। एवमेव कायस्य शब्दस्पर्शरसगन्धेषु संयमात् तत्तद्ग्राह्यशक्तिस्तम्भे श्रोत्रत्वग्रसनघ्राणजन्यज्ञानाविषयत्वरूपमन्तर्धानं शब्दादिमतो योगिनो भवतीति। (द्र० यो० भा० त० वै० पा० ३ सू० २१)।

**अन्वयः**—भूतानां चतुर्थं रूपं ख्यातिक्रियास्थितिशीलाः गुणाः सन्ति, ते च कार्यस्वभावानुपातिनो भवन्ति। त एव भूतजयार्थं संयमविषयतयाऽन्वयपदेन गृह्यन्ते। द्र०यो०भा०पा० ३ सू० ४४)।

**अपरवैराग्यम्**—वैराग्यं द्विविधम्, अपरवैराग्यं परवैराग्यञ्चेति। तत्रापरवैराग्यं चतुर्विधम्, यतमानसंज्ञा, व्यतिरेकसंज्ञा, एकेन्द्रियसंज्ञा, वशीकारसंज्ञा चेति। तत्र रागादयः कषायाश्चित्तवर्तिनः, तैरिन्द्रियाणि विषयेषु यथास्वं प्रवर्तन्ते। तन्मा प्रवर्तिषतेन्द्रियाणि विषयेषु, इतितत्परिपाचनायारम्भः प्रयत्नः, सा यतमानसंज्ञा। तदारम्भे सति केचित् कषायाः पक्वाः, पच्यन्ते पक्ष्यन्ते च केचित्। तत्र पक्ष्यमाणेभ्यः कषायेभ्यः पक्वानां व्यतिरेकेणावधारणं व्यतिरेकसंज्ञा। इन्द्रियप्रवर्तनासमर्थतया पक्वानामौत्सुक्यमात्रेण मनसि व्यवस्थापनमेकेन्द्रियसंज्ञा। औत्सुक्यमात्रस्यापि निवृत्तिरुपस्थितष्वेपि दिव्यादिव्यविषयेषु उपेक्षाबुद्धिः पूर्वोक्तसंज्ञात्रयात् परा वशीकारसंज्ञा। इयमेव वस्तुतोऽपरवैराग्यम्।

अग्रिमसूत्रे परवैरागस्य निर्देशात् । यतमानादिसंज्ञात्रयन्तु वराग्य-मात्रमिति ज्ञेयम् । तथा च योगसूत्रम्—दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यमिति । सूत्रे यद्यपि वशीकारसंज्ञाया एव चर्चा ऽस्ति तथापि एतयेव पूर्वासां संज्ञानां चरितार्थत्वात् न ताः पृथ-गुक्ता इति ( द्र० यो० भा० त० वै० पा० १ सू० १५ ) ।

विज्ञानभिक्षुस्त्वेवं विवृणुते—"विरक्तिर्दोषदर्शनात्" इति स्मृतेः आदौ विषयसान्निध्यरूपेऽवसरे दोषावरकाभावात् दोषदर्शनेन वैतृष्ण्यं ( वैराग्यम् ) भवति । तच्च वैराग्यं त्रिविधं यतमानसंज्ञा, व्यति-रेकसंज्ञा, एकेन्द्रियसंज्ञेति । इदमेव वैराग्यत्रयं यदा मुहुरभ्यस्यमानं भवति, तदा विषयसंयोगकालेऽपि अप्रतिवद्धंदोषदर्शनं समुत्पद्यते । अत्र च ''वैराग्याद्दोषदर्शनमि''ति स्मृत्यन्तरं प्रमाणम् । दोषदर्शने प्रतिबन्धाभावश्च प्रसङ्ख्यानवलाद् अर्थात् वैराग्याभ्यासेन जाय-मानस्य दोषसाक्षात्कारस्य वलवत्त्वादिति । अतएव दोषसाक्षात्कार-रूपवलाभावात् पूर्वं विरक्तस्यापि सौभर्यादेः विषयसन्निकर्षेण पूर्वोत्पन्नां दोषदृष्टिं प्रतिवध्य पुना राग उत्पादितः । एतस्मादेव दोषदर्शनोत्कर्षाद् विषयसंयोगकालेऽपि या चित्तस्यानाभोगा-त्मिका = आभोगरहिता रागद्वेषशून्या वशीकारसंज्ञा वितृष्णा सा अपरवैराग्यमिति । तथा च रागद्वेषशून्यस्य विषयसाक्षात्कारस्य योग्यता वशीकारसंज्ञाख्यं वैराग्यमिति पर्यवसितम् । तथा च हेतु-हेतुमद्भावरूपतस्तन्त्रान्तरसिद्धं वैराग्यचतुष्टयमेवोक्तम् तत्र । प्रथमभूमिका यतमानसंज्ञा वितृष्णा = ज्ञानपूर्वकं वैराग्यसाधना-नुष्ठानम् । द्वितीयभूमिका व्यतिरेकसंज्ञा, सा च जितान्येतानी-न्द्रियाणि, एतानि च जेतव्यानीति व्यतिरेकावधारणयोग्यता । तृतीयभूमिका च एकेन्द्रियसंज्ञा, सा च बाह्येन्द्रियविषयेषु रूपा-दिषु रागादिक्षये सति एकस्मिन्नेव मनसि मानापमानादिविषयक-रागद्वेषादिक्षयो रागद्वेषज्ञानपूर्वक इति । चतुर्थभूमिका तु वशी-कारसंज्ञोक्तैवेति । ( द्र० यो० वा० पा० १ सू० १५ ) ।

श्रीमच्छङ्करभगवत्पादा आहुः—अवस्थाविशेषा एवेह वैराग्यपदेन विवक्षिताः ताश्चावस्था यतमानसंज्ञाप्रभृतयः। आसु पूर्वावस्थात्रये वैतृष्ण्यमात्रं भवति, अतो वैतृष्ण्यादन्यदिह वैराग्यं वशीकारसंज्ञात्मकमभिप्रेतम् इति। ( द्र० पा० यो० सू० भा० वि० पा० १ सू० १५ )।

नागेशभट्टोऽप्याह—रागाभावमात्रं न वैराग्यम्, रोगादिनिमित्तकारुचौ वैराग्यव्यवहाराभावात्। एवं यतमानादिवैराग्यत्रयमपि न चित्तनिरोधहेतुः, तद्वैराग्यानन्तरमपि विषयसान्निध्येन चित्तक्षोभतः सौभर्यादेर्योगानिष्पत्तेः। अतो दृष्टविषये आनुश्रविकविषये च वितृष्णस्य यतमानादित्रिविधवैतृष्ण्याभ्यासवतो दिव्यादिव्यविषयसन्निधानेऽपि हेयोपादेयत्वबुद्धिशून्यत्वरूपा वशीकारसंज्ञेव वैराग्यं निरोधहेतुरिति ( द्र० पा० सू० वृ० पा० १ सू० १५ )।

अपरिणामिनी अप्रतिसङ्क्रमा च चितिशक्तिः—भोक्तृशक्तिर्न विषयाद्याकारेण परिणमते न वा क्रियावती वर्तते तथापि चितिशक्तिः स्वबुद्धिसंवेदनं करोति। यथा हि चन्द्रमसः क्रियामन्तरेणापि संक्रान्तचन्द्रप्रतिबिम्बममलं जलं स्वगतया क्रियया अचलमपि चन्द्रमसं चलमिवावभासयति, एवं विनाऽपि चितिव्यापारमुपसंक्रान्तचितिप्रतिबिम्बं चित्तं स्वगतया क्रिययाऽक्रियावतीमपि चितिशक्तिं क्रियावतीमसङ्गामपि सङ्गतामवभासयत् स्वयं भोग्यभावमासादयति चितिशक्तिञ्च भोक्तृभावमापादयतीति ( द्र० यो० भा० त० वै० पा० ४ सू० २२ )।

अपानः—मूत्रपुरीषगर्भादीनामपनयनहेतुः शरीरोपगृहीतमारुतविशेषोऽपानः। तस्य चानाभेः आ च पादतलाद् वृत्तिरिति वाचस्पतिमिश्राः। ( द्र० यो० भा० त० वै० पा० ३ सू० ३९ )।

विज्ञानभिक्षुस्तु—करणसामान्यस्यैव परिणामभूतोऽपानाख्यवृत्तिविशेषोऽपानो मूत्रपुरीषगर्भादीनामपसारणहेतुर्वायुविशेषोऽपान

इत्याह। (द्र० यो० वा० पा० ३ सू० ३९)। नागेशभट्टोऽपि पातञ्जलसूत्रवृत्तौ इममेव पक्षमुररीकरोतीति तत एवानुसन्धेयम्।

अभावः—अभावः अधिकरणावस्थाविशेषमात्ररूपः। अतएव वृत्तिनिरोधो न पृथक् कश्चिदभावो वृत्तीनामित्याह विज्ञानभिक्षुः। (द्र० यो० वा० पा० १ सू० १)।

निरोधस्य भावरूपत्वं योगमञ्जर्यामपि निरूपितम्। (द्र० यो० म० का ३)।

अभिध्यानम्—अनागतार्थेच्छा—इदमस्याभिमतमस्त्वित्याकारेति वाचस्पतिमिश्राः। (द्र० यो० भा० त० वै० पा० १ सू० २३)।

---

अभिनिवेशः—सर्वस्य प्राणिनः इयमात्माशीर्नित्या भवति। मा न भूवम्, भूयासमिति। तथा चैवंविधो मरणत्रास एवाभिनिवेश इत्युच्यते। अयं चाभिनिवेशः स्वरसवाही भवति। अर्थात् स्वभावेन वासनारूपेण वहनशीलो भवति न पुनरागन्तुकः। न चाननुभूतमरणधर्मकस्यैषा भवत्यात्माशीः। एतया च पूर्वजन्मानुभवः प्रतीयते। स चायमभिनिवेशः क्लेशः स्वरसवाही, कृमेरपि जातमात्रस्य प्रत्यक्षानुमानागमैरसंभावितो मरणत्रासः उच्छेददृष्ट्यात्मकः पूर्वजन्मानुभूतं मरणदुःखमनुमापयति। अयञ्च क्लेशो नाविदुष एवात्यन्तमूढस्यैव भवति किन्तु विदुषोऽपि विज्ञातपूर्वापरान्तस्य रूढः। तथा च सूत्रम्—"स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः" इति। (द्र० यो० भा० तथा त० वै० पा० २ सू० ९)।

विज्ञानभिक्षुरप्याह—यथाऽविद्वज्जनस्य तथा विदुषोऽपि स्वरसवाहित्वहेतुना यः (मरणत्रासात्मकः) क्लेशोऽस्ति सोऽभिनिवेश इति। (द्र० यो० वा० पा० २ सू० ९)।

योगसूत्रस्य मणिप्रभावृत्तिकार आह—पूर्वजन्मसु असकृन्मरणदुःखानुभवजन्यवासनासङ्घः स्वरसः, तेन वहति प्रवहतीति स्वरसवाही सर्वजनस्य मरणत्रासरूपोऽभिनिवेश इति। ( यो० सू० म० प्र० वृ० पा० २ सू० ९ )।

अभिनिवेशस्यैव तान्त्रिकी संज्ञा अन्धतामिस्र इत्यस्ति ।

अभ्यासः—निरुद्धवृत्तिकस्य = राजसतामसवृत्तिरहितस्य चित्तस्य या प्रशान्तवाहिता—विमला अर्थात् ; सात्त्विकवृत्तिवाहितारूपैकाग्रता सैव स्थितिः, तदर्थो यो यत्नः = वीर्यमुत्साहः = अर्थात् तादृशस्थितिप्राप्त्यर्थं साधनीभूतानां यमनियमादीनामनुष्ठानमेवाभ्यास इति। (द्र० यो० भा० त० वै० पा० १ सू० १३ )।

उक्तस्थित्यर्थं श्रद्धावीर्यस्मृतिसमाधिप्रज्ञादीनामनुष्ठानमभ्यास इति विज्ञानभिक्षुः। नागेशभट्टोऽपि भिक्षुमेवानुसरति। भोजदेवस्तु सामान्यतो वृत्तिशून्यस्य चित्तस्य स्वरूपनिष्ठः परिणाम एव स्थितिरिति वदन् तस्याः स्थितेः पुनः पुनस्तथात्वेन चेतसि निवेशनमेवाभ्यास इत्युवाच। द्रष्टव्या तत्रत्या वृत्तिः।

अयुतसिद्धावयवः समूहः—यस्य समूहस्यावयवा अन्तरालरहिताः निरन्तरा भवन्ति स समूहो अयुतसिद्धावयवः समूहः। यथा वृक्षो गौः परमाणुरिति। ( द्र० यो० भा० त० वै० पा० ३ सू० ४४।

अरिष्टत्रैविध्यम्—त्रिविधमरिष्टं भवति, आध्यात्मिकमाधिभौतिकमाधिदैविकञ्चेति। तत्राध्यात्मिकं यथा—पिहितकर्णः स्वदेहे घोषं न शृणोति, अङ्गुल्यादिना नेत्रेऽवष्टब्धे ( मर्दिते ) वह्निकणतुल्यं ज्योतिर्वा न पश्यति। आधिभौतिकं यथा—यमपुरुषान् पश्यति पितॄनतीतानकस्मात् पश्यति। तथाऽऽधिदैविकम्—स्वर्गमकस्मात् सिद्धान् वा पश्यति, विपरीतं वा सर्वं पश्यतीति। अनेन जानाति

अपरान्तम् (मरणम्) उपस्थितमिति । ( द्र० यो० भा० पा० ३ सू० २२ ) ।

यद्यप्ययोगिनामप्यरिष्टेभ्यः प्रायेण तज्ज्ञानमुत्पद्यते, तथापि तेषां तज्ज्ञानं सामान्याकारेण संशयरूपं भवति, योगिनान्तु नियत-देशकालतया प्रत्यक्षवदव्यभिचारि भवतीति विशेष इति भोजदेवः । ( द्र० पा० द० भो० वृ० पा० ३ सू० २२ ) ।

**अर्थवत्त्वम्**—भूतानां पञ्चमं रूपमर्थवत्त्वम् तदपि भूतजयसिद्धये संयमविषयीक्रियते । यद्यपि भोगापवर्गरूपार्थवत्त्वं गुणेष्वेव वर्तते ते गुणास्तन्मात्रेषु अन्वयिनः सन्ति, तन्मात्राणि च भूतेषु अन्वयीनि भवन्ति, भूतानि च भौतिकेषु गोघटादिष्वन्वयीनि भवन्तीति सर्वमर्थवद्भवति । प्रकृते च भूतेषु यदर्थवत्त्वं पञ्चमं रूपमस्ति तस्यापि संयमो भूतजयार्थमपेक्षितो भवतीति ( द्र० यो० भा० पा० ३ सू० ४४ ) ।

**अर्धमात्रम्**—उदरोरसोर्मध्ये यत्पद्ममधोमुखं तिष्ठत्यष्टदलं, तद् रेचकप्राणायामेनोर्ध्वमुखं कृत्वा तत्र चित्तं धारयेत् । तत्र पद्ममध्ये सूर्यमण्डलमकारो जागरितस्थानम्, तदुपरि चन्द्रमण्डलमुकारः स्वप्नस्थानम्, तस्योपरि वह्निमण्डलं मकारः सुषुप्तिस्थानम्, तदुपरि परं व्योमात्मकं ब्रह्मनादं तुरीयस्थानमर्धमात्रमुदाहरन्ति ब्रह्मवादिनः ( द्र० यो० भा० त० वै० पा० १ सू० ३६ ) ।

**अवयवी**—निर्वितर्कायाः समापत्तेर्विषयतया सिद्धोऽवयवीति योग-मतम् । तदुक्तं योगभाष्ये—"तस्या एकबुद्ध्युपक्रमो ह्यर्थात्माऽणुप्रचयविशेषात्मा गवादिर्घटादिर्वा लोकः । स च संस्थानविशेषो भूतसूक्ष्माणां साधारणो धर्म आत्मभूतः, फलेन व्यक्तेनानुमितः स्वव्यञ्जकाञ्जनः प्रादुर्भवति, धर्मान्तरोदये च तिरोभवति । स एष धर्मोऽवयवीत्युच्यते । योऽसावेकश्च महांश्चाणीयांश्च स्पर्शवांश्च क्रियाधर्मकश्च तेनावयविना व्यवहाराः क्रियन्ते । यस्य पुनरवस्तुकः

न प्रचयविशेषः, सूक्ष्मं च कारणमनुपलभ्यमविकल्पस्य तस्यावयव्यभावात् अतद्रूपप्रतिष्ठं मिथ्याज्ञानमिति प्रायेण सर्वमेव प्राप्तं मिथ्याज्ञानमिति। तदा च सम्यग्ज्ञानमपि किं स्याद् विषयाभावात्। यद्यदुपलभ्यते तत्तदवयवित्वेनाघ्रातम्। तस्मादस्त्यवयवी यो, महत्त्वादिव्यवहारापन्नः समापत्तेर्निर्वितर्काया विषयो भवतीति।" (द्र० यो० भा० पा० १ सू० ४३)। व्याख्यातञ्चैतदाञ्जस्येन तत्त्ववैशारदीयोगवार्तिकादिषु इति विभावनीयम्।

**अवस्थापरिणामः**—वर्तमानलक्षणस्य घटादेर्नवत्वपुराणत्वादिपरिणामोऽवस्थापरिणामः। तदुक्तम् योगभाष्ये—घटो नवपुराणतामनुभवन्नवस्थापरिणामं प्रतिपद्यत इति (द्र० यो० भा० पा० ३ सू० १३)। वाचस्पतिमिश्रा अप्याहुः—वर्तमानलक्षणापन्नस्य गवादेर्बाल्यकौमारयौवनवार्धकमवस्थापरिणामः, घटादीनाञ्च नवपुरातनताऽवस्थापरिणामः। एवमिन्द्रियाणामपि धर्मिणां वर्तमानलक्षणस्य रत्नाद्यालोचनस्य स्फुटत्वादिरवस्थापरिणाम इति। (द्र० त० वै० पा० ३ सू० १३)। न च वर्तमानलक्षणस्य नवत्वपुराणत्वाद्यवस्थापरिणामो भवतु नाम तथापि अनागतातीतलक्षणयोस्तु कीदृशोऽवस्थापरिणाम इति वाच्यम् तत्रापि शीघ्रभविष्यत्ताविलम्बभविष्यत्तादिरूपोऽवस्थाविशेषोऽनागतातीतयोर्लक्षणयोरपि वर्तत एवेति विज्ञानभिक्षुः। (द्र० यो० वा० तत्रत्यमेव)।

**अविद्या**—अनित्ये कार्ये नित्यख्यातिः, यथा ध्रुवा पृथिवी, ध्रुवा सचन्द्रतारका द्यौः, अमृता दिवौकस इति। एवं परमबीभत्सेऽशुचौ काये शुचिख्यातिः, एवं दुःखे सुखख्यातिः, तथाऽनात्मनि आत्मख्यातिः यथा बाह्योपकरणेषु चेतनाचेतनेषु पुत्रदारगृहादिषु भोगाधिष्ठाने वा शरीरे। तथा पुरुषोपकरणे मनसि अनात्मनि आत्मख्यातिरिति। इत्येवमेषाऽविद्या चतुष्पदा भवति। सा च अविद्या सम्पूर्णस्य

क्लेशसन्तानस्य कर्माशयस्य च सविपाकस्य मूलमस्ति। पुनश्च सा अमित्रागोष्पदवद् वस्तुसतत्त्वं विज्ञेयम्। यथा नामित्रो मित्राभावो न मित्रमात्रम् किन्तु तद्विरुद्धः सपत्नः। एवमविद्या न प्रमाणं न प्रमाणाभावः किन्तु विद्याविपरीतं ज्ञानान्तरमविद्येति। (द्र० यो० भा० पा० २ सू० ५)।

अत्राहुः वाचस्पतिमिश्राः—अविद्येति पदे पूर्वपदार्थप्रधानं नञ्—समासमाश्रित्य अमक्षिकम् इतिवत् विद्याया अभावोऽविद्येति न प्रसज्यप्रतिषेधः। नापि उत्तरपदार्थप्रधानं समासमाश्रित्य 'अराजपुरुष' इतिवत् विद्येव कस्यचिदभावेन विशिष्टा सती अविद्येत्यस्ति, तथा सति तस्याः क्लेशादिपरिपन्थित्वेन तद्वीजत्वासंभवात्। नापि चान्यपदार्थप्रधानं समासमाश्रित्य नास्ति विद्या यस्याः साऽविद्येति विगृह्य विद्याऽभावविशिष्टा बुद्धिरेवाविद्यापदवाच्यास्ति, विद्याया अभावमात्रेण बुद्धेः क्लेशादिवीजत्वासंभवात्, तथात्वे विवेकख्यातिपूर्वकनिरोधसम्पन्नाया अपि बुद्धेः क्लेशादिवीजत्वप्रसङ्गात्। तस्माद् विद्याविरुद्धं विपर्ययज्ञानमेवाविद्यापदवाच्यमस्तीति। (द्र० यो० भा० त० वै० पा० २ सू० ५)।

विज्ञानभिक्षुरप्याह—अस्मिश्च दर्शने सांख्यानामिवाविवेको नाविद्याशब्दार्थः, किन्तु वैशेषिकादिवद् विशिष्टज्ञानमेव (अन्यथाख्यातिरेव) इति। (द्र० यो० वा० पा० २ सू० ५)। अविद्यैव तम इति कथ्यते।

**अविद्याऽस्मितयोर्भेदः**—अविद्यातश्चास्मितताया अयं भेदो यद् वुद्ध्यादौ प्रथमं या सामान्यतोऽहंवुद्धिः, सा भेदाभेदेनाप्युपपद्यतेऽत्यन्ताभेदाग्रहणात्, सैवाविद्या। अस्मिता तु तदुत्तरकालीनः पुरुषे वुद्ध्यादिगुणदोषारोपः ईश्वरोऽहमहं भोगीत्यादिरूपः, दूरस्थवनस्पत्योरिव वुद्धिपुरुषयोरत्यन्तमेकताभ्रमश्च इत्येतदुभयरूपिणीति (द्र० यो० वा० पा० २ सू० ६)।

असंप्रज्ञातः—"विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः" इति योगसूत्रानुसारं सर्ववृत्तीनां यो विरामः=प्रत्यस्तमयः, तस्य प्रत्ययः= कारणं परं वैराग्यम्, तस्याभ्यासात् = पौनःपुन्येनानुष्ठानात् संस्कारमात्रशेषो यश्चित्तनिरोधः, सोऽसम्प्रज्ञात इति वाचस्पतिमिश्राः। ( द्र० यो० भा० त० वै० पा० १ सू० १८ )।

असंप्रज्ञातयोगे न किञ्चित् सम्प्रज्ञायते ध्येयजातमित्यन्वर्थनामायमसंप्रज्ञातयोगः तदानीं चित्तं निरालम्बनमभावप्राप्तमिव भवतीति एष निर्वीजः समाधिरित्युच्यते।

विज्ञानभिक्षुरप्याह—पुरुषपर्यन्तं कस्मिन्नप्यालम्बने चित्तस्यैकाग्रतारूपोऽभ्यासो नासंप्रज्ञातस्य साक्षात्साधको भवति। अतः पुरुषख्यातिपर्यन्तास्वखिलवृत्तिषु अलम्बुद्धिरूपो विरामप्रत्ययः परवैराग्याख्य एवासंप्रज्ञातेन साधनतयाऽऽलम्बनीक्रियते। यतः सोऽसम्प्रज्ञातोऽपि निर्वस्तुकः = नास्ति वस्तु चिन्तनीयं यत्रेत्येतादृशोऽस्ति। तस्माद् यतोऽसम्प्रज्ञातोऽपि ध्येयार्थशून्यः, अतोऽखिलध्येयवैराग्यमेव तत्रालम्बनतया हेतुर्भवतीति। तथा च कृतवैराग्याभ्यासं चित्तं निरालम्बनं निर्विषयमभावप्राप्तमिव वृत्तिरूपकार्याकरणाद् मृतकवद् भवतीत्येषोऽवस्थाविशेषोऽसंप्रज्ञात इति। ( द्र० यो० वा० पा० १ सूत्र० १८ )।

भोजदेवस्त्वाह—विरामो वितर्कादिचिन्तात्यागः, विरामश्चासौ प्रत्ययश्चेति विरामप्रत्ययः तस्याभ्यासः पौनःपुन्येन चेतसि निवेशनम्, तत्र या काचिद् वृत्तिरुल्लसति, तस्या 'नेति नेति' इति नैरन्तर्येण पर्युदसनं विरामप्रत्ययाभ्यासः, तत्पूर्वः = सम्प्रज्ञातसमाधिः, संस्कारशेषोऽन्यः तद्विलक्षणः अयमसम्प्रज्ञात इति। किन्तु व्याख्यानमिदं भाष्याननुकूलमिति ज्ञेयम्। सूत्रे पूर्वशब्दस्य हेत्वर्थकत्वेन सम्प्रज्ञातसमाधेरबोधकत्वात्।

अस्मिता—पञ्चसु क्लेशेषु मध्येऽस्मिता द्वितीयः क्लेशोऽविद्यायाः

कार्यभूता। दृक्शक्तिरूपस्य पुरुषस्य दर्शनशक्तिरूपाया बुद्धेः अर्थात् आत्मानात्मनोः परस्परमत्यन्तविलक्षणयोरविद्यावशाद् या एकात्मता इव ( एकस्वरूपापत्तिरिव ) न तु परमार्थत एकात्मता सा अस्मिता कथ्यते। दृक् = पुरुषः–भोक्ता इति यावत्, दर्शनम् = बुद्धिः–अनात्मा-भोग्यमिति यावत्। तयोः शक्तिश्च योग्यतालक्षणा। एतावता पुरुषे भोक्तृत्वयोग्यता अनात्मनि बुद्धौ च भोग्यत्वलक्षणा योग्यताऽस्तीति तयोः भोक्तृभोग्ययोर्योग्यतालक्षणसम्बन्धः सदाऽस्तीति शक्तिपदेन ध्वन्यते। तथा चात्यन्तविलक्षणयोरत्यन्तासंकीर्णयोरपि भोक्तृभोग्यशक्त्योः अनात्मनि–बुद्धौ आत्मज्ञानलक्षणयाऽविद्ययाऽऽपादिता या एकात्मता इव भवति सैवास्मिता, तस्यां सत्यां भोगः कल्पते। विवेकख्यातौ सत्यां तु स्वरूपप्रतिलम्भे सति तयोः कैवल्यमेव भवति कुतो भोगः स्यादिति। अतः इयमस्मितैव भोगसम्पादिकेति तात्पर्यम्। ( द्र० यो० भा० त० वै० पा० २ सू० ६ )।

विज्ञानभिक्षुस्तु—दृग् = द्रष्टा, दृश्यतेऽनेनेति व्युत्पत्त्या दर्शनं=करणं बुद्धिः। प्रलयादौ फलोपधानं नास्तीति "दृग्दर्शनशक्त्योरेकात्मतेवास्मिता" इति सूत्रे शक्तिग्रहणं कृतम्। तथा च तयोर्दृग्दर्शनशक्त्योरेकात्मतेव = स्वरूपतो धर्मतश्चात्यन्तमेकाकारो विपर्ययोऽस्मिताऽहङ्कार इत्याह। एतदनुसारमविद्याऽस्मितयोरयं भेदो यत् प्रथमं बुद्ध्यादौ या सामान्यतोऽहंबुद्धिर्जायते, सैवाविद्या। तत्र बुद्ध्यात्मनोः अत्यन्ताभेदस्याग्रहणात् भेदाभेदेनाप्युपपन्ना सा। किन्तु अविद्यानन्तरं जायमानायामस्मितायां तु बुद्धिपुरुषयोः स्वरूपतो धर्मतश्चात्यन्ताभेदो गृह्यते, यत्प्रभावात् पुरुषे गुणदोषादिबुद्धिधर्माणामारोपो भवति "ईश्वरोऽहमहं भोगी" इत्यादिरूपः। तथाऽस्मिताप्रभावादेव बुद्धिपुरुषयोरत्यन्तमेकताभ्रमो भवति, यथा दूरस्थवनस्पत्योरत्यन्तमेकताभ्रमो भवति लोकानाम्।

यद्यप्यविद्याऽपि भ्रमरूपा अस्मिताऽपि च भ्रमरूपा तथापि अविद्या कारणम्, अस्मिता तु तत्कार्यमित्युभयोर्विशेषः। ( द्र० यो० वा० पा० २ सू० ६ )।

यस्मिन्नहंप्रत्यये चित्तपुरुषयोर्विवेको नोपलभ्येत, सोऽयमहंप्रत्ययोऽस्मिताख्यः क्लेश उच्यते इति शङ्करभगवत्पादाः। ( द्र० यो० भा० वि० पा० २ सू० ६ ) एषा अस्मिता मोह इत्युच्यते।

**अस्मितामात्रा प्रवृत्तिः**—एषा ज्योतिष्मती प्रवृत्तिरित्युच्यते। अस्मितात्र नाहङ्कारः किन्तु आत्मतत्त्वम्। तदुक्तम्—"तमणुमात्रमात्मानमनुविद्य अस्मीत्येवं तावत् सम्प्रजानीते" इति। अस्मिताऽऽत्मताऽहन्तेति पर्याया: एषु पदेषु भावप्रत्ययश्च निर्विशेषसामान्यमात्रबोधनाय प्रयुक्तः। तथा चास्मितायां विविक्तचिन्मात्रे पुरुषे या चित्तसमापत्तिः साऽस्मितामात्रा प्रवृत्तिरुच्यते। (द्र० यो० वा० पा० १ सू० ३६ )।

**अहिंसाप्रतिष्ठा**—अहिंसास्थैर्यम्, तच्च कृतकारितानुमोदित-लोभमोहपूर्वकमृदुमध्याधिमात्रभावैरसंस्पर्शो हिंसाया इति यावत्। एवं सत्यादिप्रतिष्ठाऽपि कृतकारितादिभावैरसंस्पर्शो मिथ्याभाषणस्येत्यादि बोध्यम्।

———

**आकाशगमनम्**—पाञ्चभौतिकशरीरस्य अवकाशदायकेनाकाशेन यः सम्बन्धस्तत्र संयमं विधाय लघुनि तूलादौ तन्मयीभावलक्षणां समापत्तिं विधाय प्राप्तातिलघुभावो योगी प्रथमं यथारुचि जले सञ्चरणक्रमेण ऊर्णनाभतन्तुजालेन सञ्चरमाण आदित्यरश्मिभिश्च विहरन् यथेष्टमाकाशगमनं करोति। ( द्र० पा० यो० सू० भो० वृ० वि० पा० सू० ४२ )।

कायाकाशसम्बन्धे लघुतूलादौ वा पृथक् पृथक् संयमादाकाश-गमनसिद्धिर्भवतीति वाचस्पतिमिश्रा विज्ञानभिक्षुश्च। ( द्र० यो० भा० त० वै० तथा यो० वा० पा० ३ सू० ४२ )।

**आगमः**—आप्तेन दृष्टोऽनुमितो वार्थः परत्र स्वबोधसंक्रान्तये शब्देनोपदिश्यते। तस्मात् शब्दात् श्रोतुर्जायमाना तदर्थविषया वृत्तिरागमप्रमाणम्। यस्याश्रद्धेयार्थो वक्ता न दृष्टानुमितार्थः, स आगमः प्लवते, मूलवक्तरि तु दृष्टानुमितार्थे सत्यागमो निर्विप्लवः स्यात्। ( द्र० यो० भा० पा० १ सू० ७ ) आगच्छन्ति बुद्धि-मारोहन्ति अस्मादभ्युदयनिःश्रेयसोपाया इत्यागमः श्रुतिस्मृतीति-हासपुराणरूपः।

**आनन्दः**—इन्द्रिये स्थूलालम्बने चित्तस्याभोगोऽर्थात् तत्स्वरूप-साक्षात्कारवती प्रज्ञा, सैव ह्लाद आनन्द इत्युच्यते। अत्रेयमुपपत्तिः—प्रकाशशीलतया खलु सत्त्वप्रधानादहङ्कारात् इन्द्रियाण्युत्पन्नानि। सत्त्वं सुखमिति तान्यपि सुखानीति हेतोः तत्राभोगो ह्लाद आनन्द इति वाचस्पतिमिश्राः। (द्र०यो०भा० त० वै० पा० १ सू० १७)। विज्ञानभिक्षुस्तु—स्थूलयोर्भूतेन्द्रिययोरेव यश्चित्तस्य विचारानुगत-भूम्यारोहात् सत्त्वप्रकर्षेण जायमानो ह्लादाख्यसुखविशेष आभोगः= साक्षात्कारो भवति, स आनन्दविषयकत्वादानन्द इति। तेन चानुगतो युक्तो निरोध आनन्दानुगतनामा योग इति आह। ( द्र० यो० वा० पा० १ सू० १७ )। अत्रोभयव्याख्यात्रोरयं भेदः—वाचस्पतिमिश्र इन्द्रिये ग्रहणरूपे सुखात्मके चित्तस्याभोगमा-

नन्दमाह, तदनुगतं संप्रज्ञातश्चानन्दानुगतसंप्रज्ञातमाचष्टे । विज्ञानभिक्षुस्तु एकस्मिन्नेव स्थूले भूतेन्दियात्मके आलम्बने वितर्कमारभ्य आनन्दपर्यन्तं संम्प्रज्ञातमुदाहरतीति । मणिप्रभाकारो वाचस्पतिमेवानुसरति नागेशभट्टश्च विज्ञानभिक्षुमिति अनुसन्धेयम् ।

**आनुश्रविकविषयाः**—अनुश्रवो वेदः, ततोऽधिगता आनुश्रविकाः स्वर्गादयः । एत एवानुश्रविकविषया सन्ति ।

**आप्तः**— तत्त्वदर्शनकारुण्यकरणपाटवाभिसम्बन्धः आप्तिः, तया सह वर्तत इत्याप्तः इति वाचस्पतिमिश्राः । भ्रमप्रमादविप्रलिप्साकरणापाटवादिदोषरहित आप्त इति विज्ञानभिक्षुः । फलतो नानयोर्भेदः । ( द्र० त० वै० तथा यो० वा० पा० १ सू० ७ ) ।

**आभोगः**—स्वरूपसात्कारवती प्रज्ञा आभोगः । स च स्थूलविषयत्वात् स्थूल आभोगो वितर्क इत्युच्यते । सूक्ष्मविषयत्वात् सूक्ष्म आभोगो विचार इत्युच्यते इति वाचस्पतिमिश्राः । ( द्र० यो० भा० त० वै० पा० १ सू० १६ ) ।

विज्ञानभिक्षवस्तु व्याचक्षते—आभोगः परिपूर्णता । अर्थात् स्थूलयोर्भूतेन्द्रिययोरदृष्टाश्रुतामताशेषविशेषसाक्षात्कार एव चित्तस्य परिपूर्णतारूपः स्थूल आभोगः । अयं वितर्क इत्युच्यते । एवं तत्रैवालम्बने कारणत्वादिनाऽनुगता ये प्रकृतिमहदहङ्कारपञ्चतन्मात्ररूपा भूतेन्द्रिययोः सूक्ष्मा अर्थास्तदाकारत्वात् यः सूक्ष्मगताशेषविशेषसाक्षात्कारः, स चित्तस्य सूक्ष्म आभोगः । स च विचार इत्युच्यते । ( द्र० यो० वा० पा० १ सू० १७ ) ।

**आरुरुक्षुयतिः**—व्युत्थितचित्तोऽपि = बहिर्मुखोऽपि यो योगारूढो भवितुमिच्छति, स आरुरुक्षुयतिः । तस्यैव योगारूढत्वसंपादनाय तपःस्वाध्यायेश्वरप्रणिधानात्मकस्य क्रियायोगस्योपदेशो यमनियमादियोगाङ्गोपदेशश्चेति । स च प्राथमिकयोगो युञ्जान (युञ्जमान)

योगोत्यादिशब्दैर्व्यपदिश्यते। तदुक्तं विष्णुपुराणे—"योगयुक् प्रथमं योगी युञ्जमानोऽभिधीयते" इति। ( द्र० यो० मा० त० वै० पा० २ सू० १ )।

आरुरुक्षुयतेरेव कृते कर्म योगकारणमिति भगवद्गीतायामुक्तम्। यथा—"आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते। योगारूढस्य तस्यैव शमः कारणमुच्यते" इति।

**आरूढयोगः**—आरूढो योगो येनेतिव्युत्पत्त्या व्युत्थितचित्तभिन्नः समाहितचित्त एव योगी आरूढयोगी योगारूढो योगारूढचित्त आरूढयोगवृक्ष इति संज्ञाभिरुच्यते। अयमेव योगस्योत्तमाधिकारी, यश्च क्रियायोगादिसकलाङ्गानां नैरपेक्ष्येण अभ्यासवैराग्यमात्रसाधनेनैव योगसिद्धिं तत्फलञ्च लभत इति। (द्र० यो० वा० पा० २ सू० १) अस्यैव योगिनः कृते भगवद्गीतायामुक्तम्—योगारूढस्य तस्यैव शमः कारणमुच्यते" इति। गारुडादावप्युक्तम्—"आरूढयोगवृक्षाणां ज्ञानत्यागौ परौ मतौ" इति। अत्र त्यागो बाह्यकर्मणामेवेति विज्ञानभिक्षुः।

**आशयः**—कर्मणां विपाकानुगुणा वासनैवाशयः। चित्तभूमौ आशेरते इत्याशया इति व्युत्पत्तेः। न हि करभजातिनिर्वर्तकं कर्म प्राग्भवीयकरभभोगभावितां भावनां न यावदभिव्यनक्ति तावत् करभोचिताय भोगाय कल्पते। तस्माद् भवति करभजात्यनुभवजन्मा भावना करभविपाकानुगुणा इति ( द्र० यो० भा० त० वै० पा० १ सू० २४ )।

**आशीः**—मा न भूवम्, भूयासम् इत्याकारको मरणत्रास एवाशीः। ( द्र० यो० भा० पा० ४ सू० १० )। इदं हि वाचस्पतिमिश्रविज्ञानभिक्ष्वोरप्यनुमतम्। सदैव सुखसाधनानि मे भूयासुः, मा कदाचन तैर्मे वियोगो भूदिति यः सङ्कल्पविशेषः स एवाशीरिति भोजदेवः। मम शरीरेन्द्रियादिभिर्वियोगो मा भूत् सुखसाधनं मे

सदा भूयादित्येवंरूपः संकल्प आशीरिति योगमञ्जरीकारः। सदाहं भूयासमिति मरणत्रास एवाशीरिति मणिप्रभा।

**आसनानि**—स्थिरसुखमासनम्। स्थिरं निश्चलं सत् यत् सुखात्मकं तदासनम्। आस्यतेऽनेन प्रकारेणेति व्युत्पत्तेः उपवेशनस्य प्रकार-विशेष आसनं भवति। कश्चित्तु स्थिरं सुखमस्मिन्निति बहुव्रीहि-व्युत्पत्त्या स्थिरस्य सुखस्य साधनमासनमाह।

आसनानि च पद्मासनं, वीरासनं, भद्रासनं, स्वस्तिकं, दण्डासनं, सोपाश्रयम्, पर्यङ्कं, क्रौञ्चनिषोदनं, हस्तिनिषादनमुष्ट्रनिषोदनं समसंस्थानमित्येवमादीनि। अथवा येन संस्थानेनावस्थितस्य स्थैर्यं सुखञ्च सिध्यति तत्सर्वं स्थिरसुखं सदासनमस्तीति। ( द्र० यो० मा० त० वै० पा० १ सू० ४६ )। प्रत्येकमासनानां लक्षणानि त्वन्यतोऽवसेयानि।

आसनानि सिद्धासनादीनि चतुरशीतिरिति योगदीपिका। तदुक्तम् हठयोगप्रदीपिकायाम् "चतुरशीत्यासनानि शिवेन कथितानि च"। उप० १ श्लोक ३३।

गोरक्षनाथस्त्वाह—आसनानि च तावन्ति यावत्यो जीवजातयः। एतेषामखिलान् भेदान् विजानाति महेश्वरः। इति। ( द्र० ह० यो० प्र० सं० व्या० उप० १ श्लो० ३३ )। तेषु सिद्धासनपद्मासन-सिंहासनभद्रासनानि चत्वारि श्रेष्ठासनानि। ( द्र० ह० यो० प्र० उप० १ श्लो० ३४ )।

———

**इडा**—वामनाडी।

**इन्द्रियजयः**—ग्रहण-स्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः" इति योगसूत्रम्। (पा० ३ सू० ४७) तत्र सामान्यविशेषात्मा शब्दादिर्ग्राह्यः, तेष्विन्द्रियाणां वृत्तिर्ग्रहणम्। स्वरूपं पुनः प्रकाशात्मनो बुद्धिसत्त्वस्य सामान्यविशेषयोरयुतसिद्धावयवभेदानुगतः समूहो द्रव्यमिन्द्रियम्।

अस्मिता—अहङ्कारोऽस्मितालक्षणः इन्द्रियेष्वनुगततया इन्द्रियाणां तृतीयं रूपम्। चतुर्थं रूपं व्यवसायात्मकाः प्रकाशक्रियास्थितिशीला गुणा एव। तेषामेव हि परिणामविशेष इन्द्रियाणि। गुणेषु यदनुगतं पुरुषार्थवत्त्वं तदेवेन्द्रियाणां पञ्चमं रूपमित्येवंप्रकारेणेन्द्रियाणां पञ्च रूपाणि भवन्ति-ग्रहणम्—स्वरूपम्—अस्मिता—अन्वयः-अर्थवत्त्वमिति। एतेषु पञ्चरूपेषु संयमात् इन्द्रियजयो भवतीति। (द्र० यो० भा० त० वै० तथा यो० वा० पा० ३ सू० ४७)।

**इष्टदेवतासंप्रयोगः**—इष्टानां देवानामृषीणां सिद्धानाञ्च दर्शनमेवेष्टदेवतासंप्रयोगः कथ्यते। तच्च दर्शनं स्वाध्यायशीलस्य भवतीति। (द्र० यो० भा० पा० २ सू० ४४)।

**ईश्वरः**"...क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" इति सूत्रानुसारम् यो हि अविद्यादिक्लेशैः, कुशलाकुशलकर्मभिः = धर्माधर्मैः, जात्यायुर्भोगात्मकविपाकैः, तदनुगुणवासनाभिश्च सर्वथाऽपरामृष्टोऽस्ति एवंविधः पुरुषविशेष एवेश्वर इति पातञ्जलमतम्। कुतश्चिद् विशेषात् स ईश्वरः पुरुषान्तरेभ्यो विशिष्यते = व्यवच्छिद्यते = भेदेन परिच्छिद्यते। यतो हि कैवल्यं प्राप्ताः सन्ति यद्यपि बहवः केवलिनस्तथापि ते त्रीणि बन्धनानि च्छित्वा कैवल्यं

प्राप्ताः सन्ति। ईश्वरस्य तु स बन्धनसम्बन्धो न भूतो नापि भावी। यथा मुक्तस्य पूर्वा बन्धकोटिः प्रज्ञायते, नैवमीश्वरस्य पूर्वा बन्धकोटिः शास्त्रतो विज्ञायते। यथा च प्रकृतिलयस्योत्तरा बन्धकोटिः सम्भाव्यते, नैवमीश्वरस्योत्तरा बन्धकोटिः सम्भाविताऽपि। यतः स सदैव मुक्तः सदैवेश्वर इति। अयमेव पुरुषान्तरेभ्य ईश्वरे विशेषः। अपरश्चायं विशेषो यत् तस्यैश्वर्यं साम्यातिशयाभ्यां विनिर्मुक्तमस्ति। न हि तदीयैश्वर्य्यापेक्षया कस्याप्यन्यस्यैश्वर्यमतिशयितमस्ति। यदि स्यात्तदा स एवेश्वर इति मन्तव्यम्। तस्माद् यन्नैश्वर्यस्य पराकाष्ठा प्राप्ता स एवेश्वरः।

एवं तत्समानमपि कस्यचिदैश्वर्यं नास्ति। यदि तत् समानमपि कस्यचिदैश्वर्य्यं भवेत् तदा तुल्ययोस्तयोः युगपत्कामिते एकस्मिन्नर्थे कश्चित् कामयेत् "नवमिदमस्तु" अपरः कामयेत् "पुराणमेवेदमस्तु" इति विरुद्धकामनायामेकस्य कामनासिद्धौ अपरस्य प्राकाम्यविघातात् न्यूनत्वं प्रसज्येत। द्वयोश्च तुल्ययोः परस्परविरोधियुगपत्-कामितार्थप्राप्तिर्न सम्भवति अभिलषितार्थस्य विरुद्धत्वात्। तस्माद् यस्य साम्यातिशयैर्विनिर्मुक्तमैश्वर्यं स एवेश्वरः पुरुषान्तरेभ्यो विशिष्यमाण इति (द्र० यो० भा० त० वै० पा० १ सू० २४)।

विज्ञानभिक्षुरप्येवं विशदयत्यमुमर्थम्—यदि द्वौ बहवो वा ईश्वरा भवेयुस्तदा सर्वेषाम् अविरुद्धाभिप्रायत्वे प्रत्येकमीश्वरत्वे च कृतमन्यैरीश्वरैः, एकेनैव ईश्वरेण ईशनाकार्यस्य सम्पादितत्वात्। यदि तु सर्वे ईश्वरा मिलित्वा कार्यं कुर्युस्तदा न कश्चिद् ईश्वरः स्यात्, परिषद्वत्। ते ईश्वराः पर्यायेण ईशनाकार्यं करिष्यन्तीति यद्युच्येत तदा तेषां नित्यैश्वर्ययोगो व्याहन्येत, अन्यपर्यायावसरे तदितरेषाम् ईशनाकार्यरहितत्वात्, एवं कुकल्पनायां गौरव-प्रसङ्गाच्च। तस्मादेक एवेश्वरः सर्वातिशायिनित्यैश्वर्यवानिति।

ईश्वरप्रणिधानम्—ईश्वरप्रणिधानमत्र ईश्वरं प्रति भक्तिविशेष इति

योगभाष्यम् । स च भक्तिविशेषो मानसो वाचिकः कायिकश्चेति श्रीवाचस्पतिमिश्राः ( द्र० यो० भा० त० वै० पा० १ सू० २३ )। विज्ञानभिक्षुस्त्वाह—"ईश्वरप्रणिधानाद्वा" इति सूत्रगतं प्रणिधानं न द्वितीयपादवक्ष्यमाणं तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोग" इति सूत्रगतं विवक्षितं किन्तु असंप्रज्ञातकारणीभूतसमाधिरूपो भावनाविशेष एव, "तज्जपस्तदर्थभावन" मित्यागामिसूत्रेणैवात्रत्यस्य प्रणिधानस्य लक्षणीयत्वात् इति । ( द्र० यो० वा० पा० १ सू० २३ )। नागेशभट्टोपि पातञ्जलसूत्रवृत्तौ विज्ञानभिक्षूक्तमेवार्थमनुसरति । यदा च भाष्यविवरणकारा योगमञ्जरीकारो मणिप्रभाकारो भोजदेवश्च वाचस्पतिमिश्रमेवानुगच्छन्ति ।

**ईश्वरस्य वैषम्यनैर्घृण्याभावः**—संसारे सुखिदुःखिरूपद्विविधप्राणिदर्शनात् ईश्वरे वैषम्यनैर्घृण्यदोष आपततीति न वाच्यम्, अग्नेरौष्ण्यस्वाभाव्यवत् विशुद्धसत्त्वे भक्तवशतास्वभावस्य अपर्यनुयोज्यत्वात् । एतेन, ईश्वरः स्वभक्तानेवानुगृह्णाति नान्यान्, प्रत्युत तान्निगृहीतानपि करोति स्वभक्तैश्वर्यदानेनेत्यतो वैषम्यादिप्रसङ्ग ईश्वरे इति शङ्काऽपास्ता । वैषम्यञ्च रागद्वेषाभ्यामेव भवति न तु प्रवृत्तिमात्रेण ।

यच्च हिरण्यगर्भाद्यैश्वर्यदानाद् अन्येषां दुःखं भवति तत्रापि हिरण्यगर्भादीनामेव वैषम्यं बीजं न त्वीश्वरस्य । तस्य तु परदुःखप्रहाणेच्छा विद्यमानाऽपि भक्तवशतया कुण्ठिता स्वकार्याय विलम्बते इति । यच्च कर्मसापेक्षतया वैषम्यनैर्घृण्यपरिहारो ब्रह्मसूत्रेण कृतस्तत्राप्ययमेवाशयः—लोकानां विहितनिषिद्धरूपाणि कर्माणि देवानां सुखदुःखसाधनानि भवन्ति । अतः ईश्वरेण स्वभक्तदेवेष्वपराद्धाय यद्दुःखं दीयते यच्चानपराद्धाय सुखं दीयते तद् भक्तपारवश्यनिमित्तकमेव न तु वैषम्याद् नैर्घृण्याद्वेति । (द्र०यो० भा० पा० १ सू० २५ )।

ईश्वरस्य दशाव्ययानि—ज्ञानं वैराग्यमैश्वर्यं तपः सत्यं क्षमा धृतिः।

स्रष्टृत्वमात्मसंबोधो ह्यधिष्ठातृत्वमेव च।

अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे॥ (वा०पु०)

( द्र० यो० वा० पा० १ सू० २५ )।

ईश्वरस्य षडङ्गानि—

सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः।

अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य॥

( द्र० यो० वा० पा० १ सू० २५ ( वा० पु० )।

---

उदानः—रसादीनामूर्ध्वं नयनादुदानः, स च शरीरोपगृहीतमारुत-विशेषः, आ नासिकाग्रात् आच शिरसो वर्तमानः इति वाचस्पति-मिश्राः। ( द्र० यो० भा० त० वै० पा० ३ सू० ३९ )।

विज्ञानभिक्षुस्तु—करणसामान्यस्य परिणामभेदो वृत्तिविशेषो मुख-नासिकादिमारभ्य ब्रह्मरन्ध्रपर्यन्तवृत्तिः ऊर्ध्वगतिप्रदत्वादुदान इत्याह ( द्र० यो० वा० पा० ३ सू० ३९ )।

उदानजयः—उदाने स्वायत्तताप्राप्तिः। तस्यां सत्यां जलादिभिर्न प्रतिहन्यते = जलादिषु निर्विघ्नं सञ्चरति, प्रायणकाले अर्चिरादि-मार्गेणोत्क्रान्तिश्च योगिनो भवतीति। ( द्र० यो० भा० त० वै० पा० ३ सू० ३९ )।

उद्घातः—वायोरुद्धननं गतिनिरोध उद्घात इति विज्ञानभिक्षुः। भोजदेवस्तु "उद्घातो नाम नाभिमूलात् प्रेरितस्य वायोः शिरस्य-भिहननम्" इत्याह। द्रष्टव्यम् यो० द० पा० २ सू० ५०, उभ-योर्व्याख्यानम् )। प्राणापानव्यानोदानसमानानां सकृदुद्गमनं मूर्धनमाहत्य निवृत्तिश्चोद्घात इति कृत्यकल्पतरुः। ( द्र० मोक्षकाण्डम् पृ० १७० )।

उपसर्गाः—स्वार्थे = परार्थाद् भोगप्रत्ययाद् दृश्याद् विशिष्टे चितिमात्र-रूपे पौरुषे प्रत्यये संयमाद् याः प्रातिभश्रावण-वेदनाऽऽदर्शाऽऽस्वाद-वार्तारूपाः सिद्धयो जायन्ते, ते प्रातिभादयः समाहितचित्तस्यो-त्पद्यमानाः पुरुषसाक्षात्कारे उपसर्गाः = अन्तरायभूताः सन्ति, पुरुषज्ञाने प्रत्यनीकभूतत्वात्। व्युत्थितचित्तस्य तु कृते ते प्रातिभादयः सिद्धयः एव सन्ति। व्युत्थितचित्तो हि ताः सिद्धीरभिमन्यते, यथा च जन्मदरिद्रो द्रविणकणिकामपि द्रविणसंभारमभिमन्यते, तद्वत्। योगिना तु समाहितचित्तेन उपनताभ्योऽपि ताभ्यः सिद्धिभ्यः "उपसर्गाः" इति बुद्ध्या विरन्तव्यमिति। ( द्र० यो० भा० त० वै० पा० १ सू० ३७ )।

उपायप्रत्ययः—असंप्रज्ञातसमाधेरवान्तरभेदः उपायप्रत्ययः । उपायः श्रद्धावीर्यस्मृतिसमाधिप्रज्ञारूपः प्रत्ययो = हेतुर्यस्य स उपायप्रत्ययोऽसंप्रज्ञातसमाधिः । स च योगिनामेव भवति ।

श्रद्धा—चेतसः सम्प्रसादः = अभिरुचिः = अतीच्छा = इच्छाविशेष इति यावत् ।

वीर्यम्—श्रद्धयोत्पन्न इष्यमाणविषयकः प्रयत्नो वीर्यम् धारणेति यावत् ।

स्मृतिः—प्रयत्नाद् जायमानं ध्यानमेव स्मृतिः ।

समाधिः—योगाङ्गभूतो यमनियमाद्यङ्गेषु अष्टमः ।

प्रज्ञा—विवेकः । (द्र० पा० यो० भा० त० वै० पा० १ सू० २०) ।

उपेक्षा—अपुण्यशीलेषु उपेक्षा = माध्यस्थ्यम् = औदासीन्यम् व्युत्थितचित्तस्य योगसोपानमारुरुक्षोः परिकर्मविशेषः । ( द्र० यो० भा० पा० १ सू० ३३ ।

—०—

**ऋतम्भरा प्रज्ञा**—ऋतं सत्यमेव बिभर्तीति ऋतम्भरा प्रज्ञा। न तत्र विपर्यासगन्धोऽप्यस्तीति। ( द्र० यो० भा० पा० १ सू० ४८ )।

विज्ञानभिक्षुस्त्वाह—"ऋतम्भरा तत्र प्रज्ञा" इति सूत्रे ऋतम्भरेतिपदम् ऋतम्भरजातीयत्वविवक्षया प्रयुक्तम्। तेन शब्दार्थज्ञानविकल्पैः सङ्कीर्णायां "गौरियं भासते, नारायणोऽयं भासते" इत्याकारिकायां सवितर्कसमापत्तिजन्यायां प्रज्ञायाम् विपर्यासज्ञानत्वसत्वेऽपि न ऋतम्भरात्वस्याव्याप्तिः तस्यामपि प्रज्ञायाम् ऋतभरजातीयत्वस्य विद्यमानत्वात्। साजात्यञ्च समाधिजप्रज्ञात्वेन विवक्षितम्। अथवा "ऋतम्भरा" इति पदस्य व्युत्पत्तिनिमित्तं कामं विपर्यासरहितज्ञानत्वं भवेत् प्रवृत्तिनिमित्तन्तु समाहितचित्ते जायमाना या प्रज्ञा तद्वृत्तिधर्म एव। तस्य च धर्मस्य सवितर्कयोगजप्रज्ञायामपि सत्त्वेन अव्याप्तिदोषाभावात् इति। ( द्र० यो० वा० पा० १ सू० ४८ )।

—०—

**एकतत्त्वाभ्यासः**—विक्षेपप्रतिषेधार्थमेकतत्त्वस्य परमेश्वरस्य अभ्यासः करणीयः प्रकृतत्वात् इति वाचस्पतिमिश्राः ( द्र० यो० भा० त० वै० पा० १ सू० ३२ )।

विज्ञानभिक्षुस्तु—एकं तत्त्वं स्थूलादि किञ्चिदपि ग्राह्यं न तु परमेश्वर एवेत्याह । । ( द्र० यो० वा० पा० १ सू० ३२ )।

**एकभविकः कर्माशयः**—एको भवो = जन्म कार्यतया यस्यास्ति सः कर्माशयसमूह एकभविक इत्युच्यते, अर्थात् अनेके कर्माशया मिलित्वा एकं जन्म निर्वर्तयन्तीति । (द्र० त० वै० पा० २ सू० १३ )।

तदुक्तम् योगभाष्ये—"जन्मप्रायणान्तरे कृतः पुण्यापुण्यकर्माशयप्रचयो विचित्रः प्रधानोपसर्जनीभावेनावस्थितः प्रायणाभिव्यक्तः एकप्रघट्टकेन मिलित्वा मरणं प्रसाध्य संमूर्छितः एकमेव जन्म करोति ··· ··· अत एकभविकः कर्माशय उक्त इति" ।

**एकाग्रम्**—एकस्मिन्नेव विषयेऽग्रं शिखा यस्य चित्तदीपस्येत्येकाग्रं चित्तम् । विशुद्धसत्त्वतया एकस्मिन्नेव विषयेऽवधीकृतकालपर्यन्तमचञ्चलं निवातस्थदीपवत् तदेकाग्रम् । ( द्र० यो० वा० पा० १ सू० १ )। एकाग्रम् = एकतानमिति तत्त्ववैशारदी ।

**एकाग्रतापरिणामः**—समाहितचित्तस्य पूर्वप्रत्ययः शान्तः उत्तरस्तत्सदृश उदितः । समाधिचित्तम् उभयोः ( पूर्वोत्तरप्रत्यययोः ) अनुगतं पुनस्तथैव आ समाधिभ्रेषात् । स खल्वयं धर्मिणश्चित्तस्यैकाग्रतापरिणामः । (द्र० यो० भा० पा० ३ सू० १२ )।

अस्मिन् परिणामे सजातीय एकैकः प्रत्ययो नश्यति, अन्योन्य उत्पद्यते इत्येवं धारावाहिकः परिणामो भवतीति विज्ञानभिक्षुः । ( द्र० यो० वा० पा० ३ सू० १२ )।

**एकान्तवचनीयत्वम्**—किं सर्वो जातो मरिष्यति ? अस्त्ययं प्रश्न एकान्तवचनीयः । अत एवात्रोत्तरं भवति "ॐ भो इति । अर्थात् अवश्यं सर्वो जातो मरिष्यतीति ।" ( द्र० यो० भा० पा० ४ सू० ३३ ।

**करुणा**—आत्मनीव परस्मिन् दुःखप्रहाणेच्छा, निरुपधिपरदुःखप्रहाणेच्छा वा करुणा । इयं हि स्थिरचित्तस्य स्थितिदार्ढ्यहेतुः परिकर्मविशेष इति विज्ञानभिक्षुः । व्युत्थितचित्तस्यासूयादिनिराकरणद्वारा समाध्युपायभूतचित्तप्रसादनहेतुः परिकर्मविशेषः करुणेति वाचस्पतिमिश्राः । ( द्र० यो० भा० त० वै० तथा यो० वा० पा० १ सू० ३३ ) ।

**कर्माणि**—चतुर्विधानि कर्माणि—कृष्णं—शुक्लं—शुक्लकृष्णम्—अशुक्लाकृष्णञ्चेति । तत्र कृष्ण दुरात्मनाम् । शुक्लं तपःस्वाध्यायध्यानवताम् । शुक्लकृष्णं बहिःसाधनसाध्यम् यज्ञादिकम्, तत्र परपीडानुग्रहद्वारेणैव कर्माशयप्रचयो भवति । व्रीह्यादोनामवघातादिसमये पिपीलकादिवधसंभवात् परपीडा । अनुग्रहश्च दक्षिणादिप्रदानेन ब्राह्मणादेरिति । अशुक्लाकृष्णं संन्यासिनां क्षीणक्लेशानां चरमदेहानाम् । तत्राशुक्लं फलसंन्यासात्, अकृष्णश्च बहिःसाधनसाध्यकर्मस्वप्रवर्तनात् इति । ( द्र० यो० भा० त० वै० पा० ४ सू० ७ ) ।

**कल्पप्रलयः**—ब्रह्मणो दिनावसाने यत्र सत्यलोकवर्जं जगदस्तमेति स कल्पप्रलयः । ( द्र० त० वै० पा० १ सू० २५ ) ।

**कषायाः**—रागद्वेषमोहाः कषायाः चित्तवर्त्तिनः । एतैरेवेन्द्रियाणि यथास्वं विषयेषु प्रवर्त्यन्ते ।

**कायव्यूहज्ञानम्**—वातपित्तश्लेष्माणस्त्रयो दोषाः, धातवः सप्त त्वग्लोहितमांसस्नाय्वस्थिमज्जाशुक्राणि पूर्वं पूर्वमेषां बाह्यमित्येवं विन्यासः कायव्यूहः, तस्य ज्ञानम् नाभिचक्रे संयमाद् भवतीति । ( द्र० यो० भा० पा० ३ सू० २९ ) ।

**कायसंपत्**—दर्शनीयरूपं, लावण्यं = कान्तिः, बलं, वज्रवदृढोऽवयवव्यूहश्चेति कायसंपत् कथ्यते । तथा च योगसूत्रम्—"रूपलावण्यबलवज्रसंहननत्वानि कायसंपत्" ( पा० ३ सू० ४६ ) ।

कुण्डली—सर्वयोगतन्त्राणामाधारशक्तिः।
( द्र० ह० यो० प्र० उप० ३ श्लो १ )।

कुम्भकः—रेचितस्य वायोः पूरणानन्तरं विधारणं कुम्भकः प्राणायामः।
याज्ञवल्क्ये कुम्भकलक्षणम्—
"सम्पूर्य कुम्भवद् वायोर्धारणं कुम्भकं भवेत"।
स्कन्दपुराणे—
"न मुञ्चति न गृह्णाति वायुमन्तर्बहिःस्थितम्।
आपूर्य कुम्भवत् तिष्ठेदचलः स तु कुम्भकः"॥
कुम्भकस्य भेदद्वयम्—
केवलकुम्भकः सहितकुम्भकश्चेति।
तत्र—"रेचकं पूरकं मुक्त्वा यत्सुखं वायुधारणम्।
प्राणायामोऽयमित्युक्तः स वै केवलकुम्भकः"॥
आरेच्यापूर्य्य यत् कुर्यात् स वै सहितकुम्भकः।
कुम्भकस्य अन्ये सप्तभेदाः—
"कुम्भः सप्तविधो ज्ञेयः रेचितादिप्रभेदतः।
रेचितः पूरितः शान्तः प्रत्याहारोत्तरोधरः॥
समश्चेति विनिर्दिष्टः कुम्भकः सप्तभेदतः"।
एतेषां लक्षणानि च—
"रेचितस्य बहिः स्तम्भो वायो रेचितकुम्भकः।
पूरितस्योदरे रोधः प्रोक्तः पूरितकुम्भकः॥
कायस्यान्तर्बहिर्व्याप्तिर्या स स्याच्छान्तकुम्भकः।
स्थानयोरन्तरे रोधः प्रत्याहाराख्यकुम्भकः॥
आपूर्य यत्क्रमादूर्ध्वमूर्ध्वं रोधो हृदादिषु।
उत्तरः कुम्भकः स स्यात् अधोधो मूर्धतोऽधरः॥
रेचनापूरणे त्यक्त्वा मनसा मरुतो धृतिः।
या नाभ्यादिप्रदेशेषु समः कुम्भः प्रकीर्तितः"॥
( द्र० यो० चि० परिच्छेदः २ )।

**कैवल्यप्राग्भारं चित्तम्**—कैवल्याभिमुखं चित्तम्, कैवल्ये प्राग्भार आभिमुख्यं यस्येति व्युत्पत्तेः।

**कैवल्यम्**—गुणानामधिकारक्रमसमाप्तौ कैवल्यं भवति। तच्च कैवल्यं प्रकृतेः पुरुषस्य च भवति। तथा च योगसूत्रम्—"पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तेरिति"। पा० ४ सू० ३४)। अर्थात् कृतभोगापवर्गरूपकार्यतया पुरुषार्थशून्यानां गुणानां कार्यकारणात्मकानां व्युत्थानसमाधिनिरोधसंस्कारा मनसि लीयन्ते, मनोऽस्मितायाम्, अस्मिता लिङ्गे, लिङ्गमलिङ्गेऽव्यक्ते लीयते इति। योऽयं गुणानां कार्यकारणात्मकानां प्रतिप्रसवः=प्रतिसर्गः=प्रलयः तत्कैवल्यम्, यं कञ्चन पुरुषं प्रति न तु सर्वं प्रति, प्रधानस्यैव मोक्षः। पुरुषस्य मोक्षस्तु स्वरूपप्रतिष्ठा चितिशक्तिरिति। इयं हि स्वरूपप्रतिष्ठा शाश्वतिकोति सैव पुरुषस्य कैवल्यं मोक्ष इति। (द्र० यो० भा० त० वै० पा० ४ सू० ३४)।

विज्ञानभिक्षुरप्याह–कृतकृत्यतया पुरुषार्थशून्यानां गुणानां महदादिसूक्ष्मभूतपर्यन्तानां पुरुषोपकरणानां लिङ्गशरीराद्यात्मकानां प्रतिप्रसवः स्वकारणेऽत्यन्तविलयः स बुद्धेः कैवल्यम्। एतदेव प्रधानस्यापि ज्ञानिपुरुषं प्रति कैवल्यमुच्यते, तेन पुरुषेण सह तस्य पुनरसंयोगात्। या तु चितिशक्तिस्वरूपिणी स्वरूपप्रतिष्ठा बुद्धिसत्त्वोपाधिकरूपशून्यतारूपा जपापाये स्फटिकस्वरूपप्रतिष्ठावत्, सा पुरुषस्य कैवल्यम्। अतएव सूत्रे वाशब्दो व्यवस्थितविकल्पपरः। परस्परवियोगे हि उपाध्युपाधिमतोरुभयोरेव केवलता=एकाकिता भवति। ते उभे अपि केवलते प्रधानपुरुषगते दुःखनिवृत्त्याख्यपुरुषार्थसाधनं भवतः। अतो द्वे एव कैवल्ये मोक्षरूपे स्तः। तयोश्चाद्यं कैवल्यं मुख्यतया प्रकृतेरेवास्ति पुरुषस्य तु उपचरितम्। एतदभिप्रायेणैवोक्तं सांख्यकारिकायाम्—

"तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित् ।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥" इति ।

स्वरूपप्रतिष्ठारूपं द्वितीयं कैवल्यन्तु पुरुषस्य न निराकृतम् । तथा सति मोक्षस्य प्रकृतिमात्रनिष्ठत्वेऽपुरुषार्थत्वेन तत्र प्रवृत्त्यनुपपत्तेः, पुरुषार्थमेव करणानां प्रवृत्तिरित्यतः स्वरूपप्रतिष्ठारूपं सूत्रोक्तं द्वितीयं कैवल्यं पुरुषस्य मुख्यमेवेति । ( द्र० यो० वा० पा० ४ सू० ३४ ) ।

क्रमः—'क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः" इति सूत्रोक्तः क्रमः पूर्वसूत्रोक्तपरिणामक्रम एवेह लिलक्षयिषितः । तथा चायमर्थः- क्षणः प्रतियोगी = प्रतिसम्बन्धी आश्रयतया यस्य स क्षणप्रतियोगी, क्षणप्रचयाश्रय इत्यर्थः । परिणामक्रमो हि क्षणप्रचयानाश्रित्यैव प्रवर्तते, न तु एकेन क्षणेन परिणामस्य क्रमः (परम्परा) कल्पेत । तस्मात् क्षणसमुदायाश्रित एव परिणामक्रम उपकल्पते । स च परिणामक्रमः केनापि प्रत्यक्षीकर्तुं न शक्यते किन्तु परिणामस्यापरान्तेन = पर्यवसानेनैव अनुमीयते यत् क्रमिकपरिणामेनैवेदानीं वस्त्रे स्फुटतमा पुराणता जाता न तु सहसेति । तथा च क्षणप्रचयाश्रिता परिणामपर्यवसानानुमेया पूर्वापरीभूतपरिणामपरम्परैव परिणामक्रम इति वाचस्पतिमिश्राः । ( द्र० यो० भा० त० वै० पा० ४ सू० ३३ ) ।

विज्ञानभिक्षुस्तु व्याचष्टे—क्षणप्रतियोयोगी = क्षणस्यावसरस्य विरोधी, क्षनेनाप्यनन्तरित इति यावत् । आनन्तर्यञ्च अव्यधानम् । तथा च क्षणाव्यवहितपरिणामधारैव परिणामक्रम इति । (द्र० यो० वा० पा० ४ सू० ३३ ।

उभयोर्व्याख्यानभेदे मूलन्तु "क्षणानन्तर्यात्मा क्रमः" इति भाष्यमेवास्ति । विज्ञानभिक्षुर्हि क्षणेनाप्यानन्तर्यं क्षणानन्तर्यमिति तृतीयान्तक्षणपदविग्रहेण क्षणाव्यवहितपरिणामधारा क्रम इति लक्षणमाह । किन्तु अस्मिन् पक्षे सूत्रघटकेन "क्षणप्रतियोगी"

इति पदेन सूचिता क्षणसम्बन्धिता परिणामधारायां न प्रतीयते। वाचस्पतिमिश्रव्याख्यानन्तु सूत्रानुरोधि भाष्याविरोधि चास्ति। मिश्राणां व्याख्याने "क्षणानन्तर्यात्मा" इति भाष्यवचनपि संगच्छत एव। तथाहि क्षणानामानन्तर्यं क्षणानन्तर्यमिति षष्ठ्यन्तक्षणपद-विग्रहे क्षणानाम् आनन्तर्यं बहूनां क्षणानामविरलभाव एवास्तीति क्षणानन्तर्यपदेनापि भाष्योक्तेन क्षणप्रचय एवार्थो लभ्यते। तथा च क्षणप्रचयाश्रिता परिणामपरम्परा क्रम इति लक्षणं सूत्रभाष्योभय-समञ्जसमिति ज्ञेयम्। इदं हि परिणामक्रमस्वरूपम्।

क्रमसामान्यन्तु क्षणप्रवाहाविच्छेद एव क्षणानन्तर्यात्मा। ( द्र० यो० भा० पा० ३ सू० ५२ )।

क्रमान्यत्वं परिणामान्यत्वे हेतुः—एकस्या मृदः चूर्णपिण्डघटकपालकणा-कारा परिणतिपरम्परा क्रमवती लौकिकैःपरीक्षकैश्चाध्यक्षं समीक्ष्यते। तत्र च एकस्या मृदः चूर्णादिपरिणामभेदे तेषां क्रमभेदः = आनन्तर्य-भेद एव हेतुः कारणमस्ति। यदि चूर्णादिपरिणामाः भिन्ना भिन्नाः न स्वाक्रियेन् तदा तेषु आनन्तर्यभेदः कथमुपपद्येत। दृश्यते हि तेषामानन्तर्ये भेदः। यथा अन्यच्चेदं चूर्णपिण्डयोरानन्तर्यमन्यच्च पिण्डघटयोरन्यच्च घटकपालयोरन्यच्च कपालकणयोरिति। यो हि एकं प्रति परः स एवापरं प्रति पूर्वः। सोऽयं चूर्णपिण्डादीनां क्रमभेद आनन्तर्यभेदः एकस्मिन्नेव परिणामे स्वीक्रियमाणे नावकल्पते, अतः स्वयं भिद्यमानः क्रमः परिणाममपि भेदयति। तस्मादेकोऽपि मृद्धर्मी क्रमोपनिपतिततत्तत्सहकारिसमवधानक्रमेण क्रमवतीं नानापरिणामपरम्परामुद्वहतीति तत्र क्रमान्यत्वमेव हेतुः। ( द्र० यो० भा० त० वै० पा० ३ सू० १५ )।

अत्र धर्माणामेव क्रमान्यत्वमानन्तर्यभेदः परिणामान्यत्वे हेतुरिति वाचस्पतिमिश्राः। मृद्धर्मिण एव क्रमान्यत्वं = चूर्णपिण्डादिरूप-क्रमभेदः प्रत्यक्षमीक्ष्यमाण एकस्य तस्य मृद्धर्मिणः परिणामनानात्वे

हेतुर्लिङ्गम् (ज्ञापकः) अस्तीति विज्ञानभिक्षुः। द्रष्टव्यं तत्रत्यं वार्तिकम्। नागेशभट्टो विज्ञानभिक्षुमेवानुसरति। यदाचान्ये विवरणकारप्रभृतयो वाचस्पतिमिश्रानुसारिव्याख्यातारः।

**क्रियायोगः**—तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः। क्रियारूपो योगः क्रियायोगः। क्रियाऽपि योगसाधनत्वात् योग इत्युच्यते। तप आदीनि त्रीणि क्रियायोगः। तेषु—

**तपः**—देहेन्द्रियशोषणात्मकम्। तच्च तपस्तावदेवासेव्यं यावच्च चित्तप्रसादाविरोधि योगेऽबाधकञ्च स्यात्।

**स्वाध्यायः**—प्रणवादिपवित्राणां जपो मोक्षशास्त्राध्ययनं वा।

**ईश्वरप्रणिधानम्**—सर्वकर्मणां परमगुरावर्पणं तत्फलसंन्यासो वा। ( द्र० या० भा० पा० २ सू० १ )।

**क्लिष्टाऽक्लिष्टा वृत्तयः**—अविद्यादिक्लेशहेतुकाः कर्माशयप्रचयक्षेत्रीभूताः क्लिष्टाः वृत्तयः। ख्यातिविषया गुणाधिकारविरोधिन्योऽक्लिष्टाः वृत्तयः।

**क्लेशाः**—अविद्या, अस्मिता, रागो, द्वेषोऽभिनिवेशः इति पञ्च क्लेशाः।

**क्षणात्मक एव कालः**—क्षण एव वास्तविकः काल इति योगमतम्। क्षणानामेव प्रवाहाविच्छेदो बुद्धिसमाहारो मुहूर्तयामाहोरात्रादयः सन्ति। न च द्वौ क्षणौ सह भवत इति नास्ति क्षणानां वास्तविकः समाहारः। तस्मात् दिनाहोरात्रादिरूपेण व्यवह्रियमाणः कालो वस्तुशून्यो बुद्धिनिर्माणः शब्दज्ञानानुपाती लौकिकानां व्युत्थितदर्शनानां वस्तुस्वरूप इवावभासते इति क्षण एव वस्तुभूतः कालो न तु स्थूलकालोऽप्यस्ति। ( द्र० यो० भा० पा० ३ सू० ५२ )।

**क्षिप्तम्**—सदैव रजसा तेषु तेषु विषयेषु क्षिप्यमाणमस्थिरं यत् चित्तं तत् क्षिप्तम्। ( द्र० यो० भा० त० वै० पा० १ सू० १ )।

**क्षुत्पिपासानिवृत्तिः**—कण्ठकूपे संयमात् क्षुत्पिपासानिवृत्तिर्जायते। जिह्वाया अधस्तात् तन्तुरस्ति, ततोऽधस्तात् कण्ठोऽस्ति, ततोऽधस्तात् कूपोऽस्ति, तत्र संयमात् = धारणाध्यानसमाधित्रयात् क्षुत्पिपासे न योगिनं बाधेते। ( द्र० यो० भा० पा० ३ सू० ३१ )।

---

**गुणपर्वाणि**—गुणानां सत्त्वरजस्तमसां दृश्यत्वेन वर्णितानां चत्वारि पर्वाणि चतुर्विधाः परिणामाः ) भवन्ति । वंशस्य पर्वाणीवैतानि पर्वाणि कथ्यन्ते । तानि च पर्वाणि—विशेषाः अविशेषाः लिङ्ग-मात्रम्, अलिङ्गञ्चेति सन्ति ।

तत्राकाशवाय्वग्न्युदकभूमयः पञ्च स्थूलभूतानि, एकादशेन्द्रियाणि चेति षोडशविशेषाः ( विशेषपरिणामाः ) सन्ति गुणानामित्येकं पर्वं । षडविशेषाः—यथा शब्दतन्मात्रं, स्पर्शतन्मात्रं, रूपतन्मात्रं रस-तन्मात्रं, गन्धतन्मात्रञ्चेति पञ्चाविशेषाः, षष्ठश्चाविशेषोऽस्मिता-मात्र इति षडविशेषा ( अविशेषपरिणामाः ) गुणानामिदं द्वितीयं पर्वं । एते महतः षडविशेषपरिणामाः । सांख्ये तु अहङ्कार एव महतः परिणामः, तन्मात्राणि त्वहङ्कारस्यैव परिणाम इति भेदः । तदुक्तं मणिप्रभायाम्—अहङ्कारात् पञ्चतन्मात्राणीति सांख्याः, अहङ्कारस्यानुजानि बुद्धेरपत्यानि तन्मात्राणीति योगाः इति । लिङ्गमात्रं = महत्तत्त्वम्, इदं गुणानां तृतीयं पर्वं लिङ्गमात्रपरि-णामश्चेत्युच्यते । अलिङ्गं प्रधानमिति गुणानां चतुर्थं पर्वं विद्यते । अयमेवालिङ्गपरिणामः गुणानां सदृशपरिणामः साम्यावस्था चोच्यते । ( द्र० यो० भा० पा० २ सू० १९ ) ।

**गोमयपायसीयन्यायः**—अयं न्यायः "तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः" इतिसूत्रभाष्ये एकमनेकार्थमवस्थितञ्च चित्तमिति स्वसिद्धान्तसमर्थन-प्रसङ्गे क्षणिकवादिनं प्रति भाष्यकारेण प्रयुक्तः । तत्रेयमाशङ्का उत्थापिता यत् यदि चित्तं क्षणिकं स्यात् तदा बाल्ये अन्येन चित्तेन अनुभूतस्य यौवने अन्यच्चित्तं कथं स्मर्तृ भवेत् ? 'नान्यदृष्टं स्मरत्यन्यः' इति नियमात् । यदि अन्यदृष्टमन्यः स्मरेत् तदा देवदत्तदृष्टमपि यज्ञदत्तः स्मरेत् । अतो दोषस्यास्य निवारणाय एकं चित्तमनेकार्थ-मवस्थितञ्च स्वीकार्यम् । तेनैकमेव चित्तं बाल्येऽनुभूय यौवने स्मरतीति नाव्यवस्था ।

यदि तु एकसन्तानोत्पन्नत्वेन अनुभवसंस्कारस्मृतीनां कार्यकारणभाव-मभ्युपगम्योक्ताव्यवस्था परिह्रियेत तदा गोमयपायसीयो न्याय आक्षिप्तो भवेत्। अर्थात् एकसन्तानोत्पन्नत्वेन यदि देवदत्तीयः प्रत्ययो देवदत्ते एव संस्कारं स्मृतिञ्च जनयेत् तदा गव्यत्वेन हेतुना गोमय-मपि पायसं स्यात् = गोमयं पायसं गव्यत्वात् प्रसिद्धपायसवत् इति। तस्मात् एकसन्तानोत्पन्नत्वं नानुभवसंस्कारस्मृतीनां कार्य-कारणभावनियामकमिति पूर्वोक्ताऽव्यवस्था तदवस्थैव। (द्र० यो० वा० पा० १ सू० ३२)।

**ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः**—निर्मलस्य मणेरिव अभ्यासवैराग्याभ्यां क्षीणराजसतामसप्रमाणादिवृत्तेश्चित्तस्य स्थूल-सूक्ष्मभूतात्मकग्राह्यपदार्थेषु, तथा ग्रहणेषु इन्द्रियेषु, तथा अस्मितास्पदे ग्रहीतृपुरुषे स्थितस्य या तत्तदाकारापत्तिः सा समापत्तिरित्युच्यते (द्र० यो० भा० त० वै० पा० १ सू० ४१)।

—०—

**चत्वारो योगिनः**—योगिनश्चत्वारो भवन्ति प्रथमकल्पिको, मधुभूमिकः, प्रज्ञाज्योतिः, अतिक्रान्तभावनीयश्चेति ।

तत्र अभ्यासी प्रवृत्तमात्रज्योतिर्न तु वशीकृतपरचित्तादिज्ञानः, स प्रथमकल्पिकः ।

ऋतम्भरप्रज्ञो द्वितीयः । ऋतम्भरा प्रज्ञा यस्य स द्वितीयो मधुभूमिको योगी ।

भूतेन्द्रियजयी तृतीयः । तेन हि योगिना स्थूलादिसंयमेन ग्रहणादि-संयमेन च भूतेन्द्रियाणि जितानि ।

अतिक्रान्तभावनीयश्चतुर्थः । तेन हि योगिना सर्वाणि भावनीयानि = निष्पादनीयानि विशोकादिपरवैराग्यपर्यन्तानि अतिक्रान्तानि । अतो न किञ्चित् कर्तव्यान्तरमवशिष्यते केवलमसम्प्रज्ञातसमाधिना चित्तविलयमात्रमवशिष्यत इति ।

**चलं हि गुणवृत्तम्**—चलमिति भावनिर्देशः, तेन चलत्वं चाञ्चल्यं गुणानां स्वभावः ।

**चित्तम्**—चित्तमन्तःकरणं बुद्धिरित्यनर्थान्तरम् ।

**चित्तं त्रिगुणम्**—चित्तं हि प्रख्या-प्रवृत्ति-स्थितिशीलत्वात् त्रिगुणम् । तत्र प्रख्याशीलत्वात् सत्त्वगुणं चित्तम् । सत्त्वप्राधान्यात् प्रसाद-लाघवप्रीत्यादयोऽपि चित्तस्य सात्त्विका भावाः ।

एवं प्रवृत्तिशीलत्वात् रजोगुणं चित्तम् । रजःप्राधान्यात् परिताप-शोकादयोऽपि चित्तस्य राजसा भावाः सन्ति । एवं स्थिति-शीलत्वात् तमोगुणं चित्तम् । प्रवृत्तिविरोधी तमोवृत्तिधर्मः स्थितिः । स्थितिग्रहणात् गौरवावरणदैन्यादयोऽपि तामसा भावा-श्चित्तस्योपलक्षिता भवन्ति ।

तथा चैकमपि चित्तं त्रिगुणनिर्मिततया गुणानाञ्च वैषम्येण परस्परविमर्दवैचित्र्याद् विचित्रपरिणामं सदनेकावस्थमुपपद्यत इति । ( द्र० यो० भा० त० वै० पा० १ सू० २ ।

प्रख्या = प्रख्यानं = प्रकाशनं, स हि सत्त्वगुणस्य धर्मः। प्रवृत्तिः = प्रवर्तनं = व्यापारः, स हि रजोधर्मः। स्थितिः = स्थानं = वरणं = प्रतिवन्धः, स च तमोधर्मः। एवंशीला हि सत्त्वादयो गुणाः, चित्तञ्च प्रख्यादिशीलं, तस्मात् त्रयाणां गुणानां परिणामश्चित्त-मिति विवरणकाराः।

चित्तं परार्थम्—अनेकाभिः कर्मवासनाभिः क्लेशवासनाभिश्च समन्वितम्। अतएव चित्रीकृतमपि चित्तं परस्य पुरुषस्य भोगापवर्गार्थं वर्तते न तु स्वार्थम्, संहत्यकारित्वात् गृहादिवत्। न हि गृहादिभोग्य-जातं गृहार्थं भवति किन्तु परार्थम्। एवं न हि सुखभोगो दुःखभोगो वा सुखार्थं दुःखार्थं वा किन्तु परार्थम्। एवमपवर्गसाधनमपि ज्ञानं न ज्ञानार्थं किन्तु परस्य पुरुषस्य भोगापवर्गार्थं भवतीति। (द्र० यो० भा० त० वै० पा० ४ सू० २४)।

चित्तं सर्वार्थम्—यथा हि नीलाद्यनुरक्तं चित्तं नीलादिविषयं प्रत्यक्षेणै-वावस्थापयति, एवं द्रष्टृच्छायापत्त्या द्रष्टृनुरक्तं चित्तं द्रष्टारमपि प्रत्यक्षेणावस्थापयति। अत एव विषयाकारमहमाकारञ्च ज्ञानं भवति "नीलमहं जानामी" ति। तस्माद् द्रष्टृदृश्याभ्यामुपरक्तत्वात् सर्वरूपाकारनिर्भासं चित्तं सर्वार्थमिति गीयते योगैः। (द्र० यो० भा० तथा त० वै० पा० ४ सू० २२)।

विज्ञानभिक्षुस्त्वाह—सर्वे = ग्रहीतृग्रहणग्राह्याः पुरुषस्य अर्थाः = भोग्या अस्मिन् इति सर्वार्थम् चित्तम्। "अयं घट" इति ज्ञाना-नन्तरं "घटमहं जानामी" ति ग्रहीतृग्रहणग्राह्याकारस्य बुद्धे-र्वृत्त्यन्तरस्य साक्षिभास्यस्य 'अयंघट' इति वृत्तिवदेव प्रायशो दर्शनात्। बाधकं विना सन्निकृष्टवस्त्वाकारतास्वभावस्य चित्ते सर्वसम्मतत्वात् इति। (द्र० यो० वा० पा० ४ सू० २३)। उभयमते चित्ते नीलाद्याकारता इन्द्रियसंनिकर्षादिजन्यवृत्तिप्रयोज्या, पुरुषाकारता च प्रतिबिम्बमाध्यमेनेति न कश्चिद् विशेषः। किन्तु नीलादिविषय-

पुरुषोभयाकाराया बुद्धिवृत्तेर्भानार्थं पुरुषेऽपि तादृशबुद्धिवृत्तेः प्रतिबिम्ब आवश्यक इति विज्ञानभिक्षुर्मन्यते । द्रष्टव्यं तत्रैव ।

चित्तपरिकर्म—सुखितेषु मैत्री, दुःखितेषु करुणा, पुण्यशालिषु मुदिता, अपुण्यशालिषु उपेक्षा इत्यादि परिकर्मजातं चित्तप्रसादहेतुरस्ति, येन चित्तं स्थितिपदं लभते । एवं प्राणायामो विभिन्नविषयिण्यो धारणाश्च चित्तपरिकर्माणि सन्ति चित्तस्थितिहेतुभूतानि । ( द्र० यो० सू० ३३, ३४, ३५, ३६, ३७, ३८, ३९ ) ।

चित्तभूमयः—क्षिप्तं मूढं, विक्षिप्तम्, एकाग्रं, निरुद्धमिति पञ्च चित्तस्य भूमयः । ( द्र० यो० वा० पा० १ सू० १ ) ।

चित्तवैशारद्यम्—पापादिरूपावरणमलापेतस्य प्रकाशस्वभावस्य बुद्धिसत्त्वस्य रजस्तमोभ्यामनभिभूतोऽतएव स्वच्छः = ध्येयगताशेषविशेषप्रतिबिम्बोद्ग्राही यः स्थितिप्रवाहः ( एकाग्रताधारा ) तदेव चित्तवैशारद्यम् । ( द्र० यो० वा० पा० १ सू० ४७ ) ।

चित्तसत्त्वम—चित्तरूपे परिणतं सत्त्वं चित्तसत्त्वम् । तादृशं चित्तं प्रख्याशीलं भवति, सत्त्वप्राधान्यात् । (द्र०त०वै० पा० १ सू० २) ।

चित्तसंवित्—यदिदमस्मिन् ब्रह्मपुरे दहरं=गर्तात्मकं पुण्डरीकं मनसोऽधोमुखं वेश्म, तदेव हृदयं तस्मिन् संयमात् स्ववृत्तिविशिष्टस्य चित्तस्य साक्षात्कारो भवतीति । ( द्र० यो० भा० त० वै० पा० ३ सू० ३४ ) ।

———

जगत्सृष्टौ परमात्मनो भूतानुग्रहः प्रयोजनम् – भूतानां = प्राणिनाम् अनुग्रहः एव जगत्सृष्टौ परमात्मनः प्रयोजनम्। यतो हि शब्दाद्युपभोगविवेकख्यातिरूपकार्यद्वयकरणात् किल चित्तं चरितार्थं सन्निवर्तते। चित्ते निवृत्ते पुरुषः केवली भवति। अतस्तत्प्रयोजनाय कारुणिको भगवान् विवेकख्यात्युपायं कथयति। अतो यावत्पर्यन्तं जन्तूनां विवेकख्यातिर्न जायते तावत्पर्यन्तं चित्तस्याचरितार्थत्वात् ईश्वरो जन्तूनां पुण्यापुण्यसहायः सन् सुखदुःखे भावयन्नपि नाकारुणिकः किन्तु सानुग्रह एव। ( द्र० यो० वा० पा० १ सू० २५ )।

जातिलक्षणदेशैरन्यतावच्छेदः—यत्र देशसारूप्यं लक्षणसारूप्यञ्च वर्तते तत्र जात्यैव अन्यताया अवच्छेदो = ज्ञानं भवति, यथा गौरियं वडवेयमिति।

एवं यत्र तुल्यदेशत्वं तुल्यजातीयत्वञ्च स्तः तत्र लक्षणमेवान्यत्वं प्रत्याययति। यथा कालाक्षी गौः स्वस्तिमती गौरिति।

एवं यत्र द्वयोरामलकयोर्जातिसारूप्यं लक्षणसारूप्यञ्च स्तस्तत्र देशभेद एवान्यत्वकर इदं पूर्वमिदमुत्तरमिति।

यदा तु पूर्वमामलकमन्यव्यग्रस्य ज्ञातुरुत्तरदेश उपावर्त्यते तदा तुल्यदेशत्वे पूर्वमेतदुत्तरमेतदिति प्रविभागो न भवति, अतस्तत्रस्यतत्त्वज्ञानाय योगभाष्ये उक्तम् "ततः प्रतिपत्तिः विवेकजज्ञानादिति"। ( पा० ३ सू० ५३ )।

जात्यन्तरपरिणामः—मनुष्यजातिपरिणतानां कायेन्द्रियाणां जन्मौषधिप्रभृतिजन्यसिद्धिभिर्यो देवतिर्यग्जातिपरिणामः स खलु प्रकृत्यापूराद् भवति, न सङ्कल्पमात्रेण। तत्र कायस्य प्रकृतिः पृथिव्यादीनि भूतानि, इन्द्रियाणां प्रकृतिरस्मिता। अतो भूतानामस्मितायाश्च अवयवानुप्रवेश एवापूर उच्यते। तथा च भूतावयवानुप्रवेशादेव कायो वर्धते, अस्मितावयवानुप्रवेशादेव चेन्द्रियाणि वर्धन्ते। इत्थमेव शरीरस्य बाल्यकौमारयौवनवार्धकादीनि,

न्यग्रोधधानाया न्यग्रोधतरुभावश्च, वह्निकणिकायास्तृणराशिनि-वेशिताया वा प्रोद्भवज्ज्वालासहस्रसमालिङ्गितगगनमण्डलत्वं च प्रकृत्यापूरादेव भवति। द्र० यो० भा० त० वै० पा० ४ सू० २)।

एतेन वामनाद्यवताराणां क्षणादेव त्रिभुवनव्यापित्वविश्वरूपत्वादिकं मार्कण्डेयादिभ्यो विष्णुना मायाप्रदर्शनञ्च प्रकृत्यापूरेण भवतीति बोध्यम्। आपूर इत्युपलक्षणम्। अतो जात्यन्तरपरिणामः प्रकृत्यप-सारणेनापि भवति। अत एवागस्त्यादीनां समुद्रपानादिकं तोयादि-प्रकृत्यपसारणेन जातम्। एवमणिमादिरूपपरिणामविशेषश्च प्रकृत्य-पगमाद् भवतीति बोध्यम्। एवमेव परमेश्वरः क्षणेनैव प्रकृत्या-पूरापसारणादिभिर्जगदन्यथयितुमुत्पादयितुं प्रविलापयितुं वा स्वसङ्कल्पात् शक्नोतीति विज्ञानभिक्षुः। (द्र० यो० वा० तत्रैव)।

जात्यादिभिर्व्यवहितानामपि वासनानां स्मृत्यादिजनने आनन्तर्यं भवत्येव—यदि कश्चिन्मनुष्यभावमनुभूय मृतस्तथा मरणानन्तरम् मार्जारभावमधिगतो जन्म गृहीतवान् अथवा एकस्मिन् देशे मृत्वा दूरदेशान्तरे जन्म गृहीतवान्, अथवा एकस्मिन् काले मृत्वा कल्प-शतव्यवधानेन जन्म गृहीतवान् तदा तस्य प्राणिनोऽव्यवहिततया मनुष्यवासनाया एवाभिव्यक्त्या भवितव्यम्। तथा च मार्जारो भूत्वाऽपि अनन्तरतया मानवोचितामेव स्मृतिं क्रियाञ्च कुर्यात् न तु अनेकजन्मव्यवधानेन पूर्वानुभूतमार्जारभाववासनाऽभिव्यज्येत न वा मार्जारोचितां स्मृतिं क्रियाञ्च कुर्यात्। न खल्वस्ति संभवो यदन-न्तरदिवसानुभूतं न स्मर्यते व्यवहितदिवसानुभूतञ्च स्मर्यत इति।

एवं मरणानन्तरं दूरदेशे गृहीतजन्मतया बहुदेशव्यवहिता वासना नाभिव्यज्येरन् तथा कस्यचित् कर्मणः विपाकरूपेण कल्पशतव्यव-धानेन यदि कश्चित् मार्जारादिभावं प्राप्नोति तदा तस्यापि कल्पशत-व्यवहिताः पूर्ववासना नाभिव्यज्येरन्नित्येवमाद्याशङ्का न करणीया। यतो हि मार्जारादिवासना यद्यपि मनुष्यादिनानाजात्या, दूरदेशेन,

कल्पशतेन वा व्यवहिता वर्तते तथापि मार्जारादिविपाकानुगुणं कर्मातिव्यवहितानामपि मार्जारादिवासनानामभिव्यञ्जकं भविष्यति। अतो जातिदेशकालव्यवहितानामपि वासनानां निमित्तनैमित्तिकभावानुच्छेदादानन्तर्यमेवास्ति अव्यवहितवत् कार्यकारि च भवति, अन्यथा कर्मफलानुपपत्तेः। स्मृतिसंस्कारयोरेकरूपत्वनियमादिति सिद्धान्तः। (द्र० यो० भा० त० वै० तथा यो० वा० पा० ४ सू० ९)।

**जीवन्मुक्तः**—अविद्यादिक्लेशानां कुशलाकुशलादिकर्माशयानाञ्च निवृत्तौ सत्यां जीवन्नेव विद्वान् विमुक्तो भवति भाविजन्मादिरहितो भवति। अयमेव जीवन्मुक्तः। (द्र०यो० भा० त० वै० पा० ४ सू० ३०)।

**अत्र विज्ञानभिक्षुः**—अभिनिवेशातिरिक्ता एव क्लेशाः प्रारब्धातिरिक्ता एव च कर्माशया जीवन्मुक्तस्य निवृत्ता भवन्ति। "स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः" इति सूत्रानुसारात् प्रारब्धकर्मणां भोगेनैवासंप्रज्ञातयोगेनैव वा क्षयस्य श्रुत्यादौ प्रतिपादनाच्च। (द्र० यो० वा० पा० ४ सू० ३०)।

**जीवात्मपरमात्मप्रज्ञयोर्योगमोक्षहेतुत्वम्**—जीवात्मप्रज्ञा परमात्मप्रज्ञा च उभे अपि प्रज्ञे देहाद्यभिमाननिवर्तकत्वेन परवैराग्यद्वारा समाधिं तत्फलं मोक्षं च सम्पादयतः। अयन्तु विशेषः—परमात्मप्रज्ञा हि अतितीव्राभ्यासं विनाऽपि आसन्नतमयोगहेतुतया मोक्षहेतुतया च जीवात्मप्रज्ञापेक्षया श्रेष्ठा। अत एव श्रुतिस्मृतीतिहासादिषु प्रायशो ब्रह्मज्ञानमेव मोक्षहेतुतयोपदिश्यते, कदाचिदेव तु स्वातन्त्र्येण जीवतत्त्वज्ञानमिति। यदि चोभयोरेव तुल्यवद्विकल्पः स्यात्तर्हि "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय, तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ, अमृतस्यैष सेतु" रित्यादिश्रुतयो व्याकुप्येरन्। परमात्मप्रज्ञाया मुख्यकल्पत्वे तु उक्तवाक्यानि मुख्यसाधनपरतयोपपद्यन्त इति। जीवात्मप्रज्ञाया अनुकल्पत्वेनैव साऽऽ-

सन्नतमयोगोत्पादनार्थमभ्यासस्यातितीव्रत्वमपेक्षते, परमात्मप्रज्ञा तु नापेक्षते इति विज्ञानभिक्षुः। ( द्र० यो० वा० पा० १ सू० २३ )।

जीवानां गौणमात्मत्वम्—व्यावहारिकपारमार्थिकभेदेन आत्मा द्विविधः। पारमार्थिक आत्मा परमात्मैव। जीवात्मा तु व्यावहारिक एवात्मा। जीवानां च चितिशक्तिमत्तामात्रेणैवात्मत्वं गौणं बुद्ध्याद्यापेक्षिकञ्च। यद्यपि जीवो मुख्यात्मा न भवति तथापि तज्ज्ञानादपि धर्माधर्मरागादिनिवृत्त्या मोक्षो भवत्येव।

एवमेव व्यवहारपरमार्थभेदात् एकात्मनानाऽऽत्मतावादौ श्रुतिस्मृतिदर्शनेष्वविरुद्धाविति विज्ञानभिक्षुः। ( द्र० यो० वा० पा० १ सू० २८ )।

ज्ञानकर्मणोः मोक्षे तुल्यवत् समुच्चयाभावः—"विद्यां चाविद्यां च यस्तद्वेदोभयं सह, अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इति श्रुत्या ज्ञानकर्मणोः साहित्यमुक्तम्। तत्राङ्गाङ्गिनोः कर्मज्ञानयोरौत्सर्गिकं सहानुष्ठानमेवाभिप्रेतं न तु मोक्षाख्यफले सम्पादनीये तयोः तुल्यवत् समुच्चयः। "अविद्यया मृत्युं तीर्त्वा" इत्यनेन ज्ञानविप्लवनिवृत्त्याख्यमृत्युतरणद्वारेण मोक्षदायिन्यां विद्यायामेव कर्मण उपयोगावगमात्। अतः—

"न केवलेन योगेन प्राप्यते परमं पदम्।
ज्ञानं तु केवलं सम्यगपवर्गप्रदायकम्॥"

इत्यादिवाक्यैर्योगपदोक्तकर्मनिरपेक्षाद् ज्ञानादपि मोक्षसिद्धिरुच्यते। कर्मणां ज्ञानाङ्गत्वन्तु पूर्वजन्मन्यनुष्ठितानामपि जडभरतादिषु सिद्धम्। एवं सति—

"समाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः।
तथैव ज्ञानकर्मभ्यां लभते परमं पदम्॥

इत्यादि वाक्यानि अङ्गाङ्गिनोरौत्सर्गिकसहानुष्ठानपराण्येव सन्ति न तु मोक्षं प्रति समुच्चयसाधकानि। (द्र० यो० वा० पा० ३ सू० ७)।

ज्ञानस्य सप्तभूमयः—

ज्ञानभूमिः शुभेच्छाख्या प्रथमा समुदाहृता।
विचारणा द्वितीया स्यात् तृतीया तनुमानसा॥
सत्त्वापत्तिश्चतुर्थी स्यात् ततोऽसंसक्तिनामिका।
परार्थाभाविनी षष्ठी सप्तमी तुर्यगा स्मृता॥

इति योगवाशिष्ठम्।

तत्र—

शुभेच्छा—तीव्रमुमुक्षा।

विचारणा—श्रवणमननात्मका।

तनुमानसा—निदिध्यासनरूपा। इमास्तिस्रः साधनभूमिकाः। आसु भूमिषु साधक इत्युच्यते।

सत्त्वापत्तिः—अहं ब्रह्मास्मीत्याकारिकाऽपरोक्षवृत्तिरूपा चतुर्थी फलभूमिरियम्। इयं सम्प्रज्ञातयोगभूमिका। अस्यां योगी ब्रह्मविदित्युच्यते।

असंसक्तनामिका—सत्त्वापत्तिभूमौ उपस्थितासु सिद्धिषु असंसक्तता। अस्यां योगी स्वयमेव व्युत्तिष्ठते। इमां भूमिं प्राप्तो ब्रह्मविद्वर इत्युच्यते।

परार्थाभाविनी—यस्यां भूमौ परब्रह्मातिरिक्तमर्थं न भावयति सा परार्थाभाविनी। अस्यां योगी परप्रबोधित एव व्युत्तिष्ठते। एतां प्राप्तो योगी ब्रह्मविद्वरीयानित्युच्यते।

तुर्यगा—अस्यां योगी स्वतः परतो वा न व्युत्थानं प्राप्नोति ब्रह्मविद्वरिष्ठश्चोच्यते। (द्र० ह० यो० प्र० उप० १ श्लो० ३ ज्योत्स्ना-व्याख्या)।

**ज्योतिष्मती प्रवृत्तिः**—उदरोरसोर्मध्ये यत्पद्ममधोमुखं तिष्ठत्यष्टदलं, तद्रेचकप्राणायामेनोर्ध्वमुखं कृत्वा तत्र चित्तं धारयेत्। तन्मध्ये सूर्यमण्डलमकारो जागरितस्थानम्, तस्योपरि चन्द्रमण्डलमुकारः स्वप्नस्थानम्, तस्योपरि वह्निमण्डलं मकारः सुषुप्तिस्थानम्, तस्योपरि परव्योमात्मकं ब्रह्मनादं तुरीयस्थानमर्धमात्रमुदाहरन्ति ब्रह्मवादिनः।

तत्र कर्णिकायामूर्ध्वमुखी सूर्यादिमण्डलमध्यगा ब्रह्मनाडी। ततोऽप्यूर्ध्वं प्रवृत्ता सुषुम्ना नाम नाडी, तया खलु बाह्यान्यपि सूर्यादीनि प्रोतानि। सैव चित्तस्य = मनसः स्थानम्, तस्यां धारणां कुर्वतो योगिनश्चित्तसंविदुत्पद्यते। सा च बुद्धिसंवित् सूर्येन्दुग्रहमणीनां प्रभारूपाकारेण नानारूपा भवति। इयमेका विशोका = दुःखरहिता प्रकाशरूपा ज्योतिष्मती प्रवृत्तिः। अत्र च बुद्धिरिति वैकारिकाहङ्कारकार्यं मनोऽभिप्रेतम् न तु महत्तत्वम्।

तथाऽस्मितायां धारणां कुर्वतो योगिनश्चित्तं निस्तरङ्गमहोदधिकल्पं शान्तमनन्तमस्मितामात्रं भवति। तत्रापि विधूतरजस्तमोमलाऽस्मितैव सत्त्वमयी ज्योतिरस्तीति अस्मितामात्रा प्रवृत्तिरपि द्वितीया ज्योतिष्मती प्रवृत्तिरुच्यते।

अनया द्विविधयाऽपि विशोकया ज्योतिष्मत्या प्रवृत्त्या योगिनश्चित्तं स्थितिपदं लभते। (द्र० यो० भा० त० वै० पा० १ सू० ३६)।

—०—

**तद्गतिज्ञानम्**—चन्द्रे संयमानन्तरं ध्रुवे संयमं कृत्वा ताराणां गतिं जानाति योगी। (द्र० यो० भा० पा० ३ सू० २८)।

**तद्धर्मानभिघातः**—स्थूल-स्वरूप-सूक्ष्मान्वयार्थवत्त्वेषु संयमाद्भूतजयो भवति। तेन च भूतधर्मानभिघातरूपा सिद्धिर्जायते योगिनः। तथा पृथ्वी स्वमूर्त्या योगिनः शरीरादिक्रियां न निरुणद्धि, ततः शिलामप्यनुविशति, नापः स्निग्धाः क्लेदयन्ति, नाग्निरुष्णो दहति, न वायुः प्रणामिस्वभावो वहति शोषयति वा, अनावरणात्मकेऽप्याकाशे आवृतकायो भवति, येन सिद्धानामप्यदृश्यो भवति। एवं भूतजयी योगी भूतधर्मैर्नाभिहन्यते इति। (द्र० यो० भा० पा० ३ सू० ४५)। स्थूलादिस्वरूपञ्च भूतजयप्रसङ्गे प्रतिपादयिष्यते।

**तपः**—रजस्तमः समुद्रेकरूपाया अशुद्धेर्नितान्तविरलतासम्पादकं देहेन्द्रियशोषणं तपः। (द्र० यो० भा० त० वै० पा० २ सू० १)।

**ताराव्यूहज्ञानम्**—चन्द्रे संयमं कृत्वा ताराणाँ व्यूहं जानाति योगी। तथा च योगसूत्रम्—"चन्द्रे ताराव्यूहज्ञानम्"। इति। (पा० ३ सू० २७)।

**तीव्रसंवेगः**—तीव्रश्चासौ संवेगश्च तीव्रसंवेगः। संवेगो वैराग्यमिति तत्त्ववैशारदी, उपायानुष्ठाने शैघ्र्यम् इति विज्ञानभिक्षुः, क्रियाहेतुर्दृढतरः संस्कार इति भोजवृत्तिः, साधनानुष्ठानं प्रत्युपक्रम इति विवरणम्। तथा च अधिमात्रोपायत्वे सति तीव्रसंवेगो यो योगी तस्यासन्नः समाधिलाभः समाधिफलञ्च भवतीति। तथा च सूत्रम् "तीव्रसंवेगानामासन्नः।" (पा० १ सू० २१)।

**त्रैलोक्ये ऐकान्तिकनित्यत्वानित्यत्वयोरभावः**—चितिशक्तेरिव त्रैलोक्यस्यैकान्तिकी नित्यता नास्ति। यतो हीदं त्रैलोक्यं व्यक्तेः = अर्थक्रियाकारिणो रूपादपैति। प्रमाणेन नित्यत्वप्रतिषेधात्। यदि हि घटो व्यक्तेर्नापेयात् तदा कपालशर्करा-चूर्णादिष्ववस्थासु अपि व्यक्तो घटो भवेत् इत्यतः पूर्ववत् उपलब्धि

कुर्यादर्थक्रियाञ्च कुर्यात्। तस्मादनित्यं त्रैलोक्यम्। तथापि नैकान्ततोऽनित्यत्वमपि—तुच्छत्वमपि त्रैलोक्येऽस्ति, विनाश-प्रतिषेधात्। तथाहि यत्तुच्छं न तद् कदाचिदपि उपलब्धिमर्थं-क्रियाञ्च करोति, यथा गगनारविन्दम्। करोति चैतत् त्रैलोक्यं कदाचिदप्युपलब्ध्यर्थक्रिये इति नैकान्तिकानित्यमपि त्रैलोक्यम्। नाप्यत्यन्तनित्यं त्रैलोक्यं येन चितिशक्तिवत् कूटस्थनित्यं स्यात्। किन्तु कथञ्चित् नित्यम्। अतएव परिणामि। चितिशक्तिवदत्यन्त-नित्यत्वे ( कूटस्थनित्यत्वे ) तु अपरिणामि जगत् प्रसज्येतेति। ( द्र० यो० भा० त० वै० पा० ३ सू० १३ )।

---

दर्शनशक्तिः—दृश्यते इति दर्शनं = बुद्धिः सैव शक्तिर्योग्यता शक्ति-शक्तिमतोरभेदात् । बुद्धिर्हि दृश्यतया भोग्या भोक्तुः द्रष्टुः पुरुषस्येति बुद्धिगता भोग्यतैव दर्शनशक्तिरिति । पुरुषश्च भोक्तृत्वात् भोक्तृशक्ति-इंक्छक्तिरस्तीति । ( द्र० यो० भा० त० वै० पा० २ सू० ६ ) ।

दृश्यतेऽनेनेति दर्शनं = करणं बुद्धिः, प्रलयादौ अध्यवसायरूपफलोप-धानं नास्तीति शक्तिग्रहणम् इति विज्ञानभिक्षुः । विवरणकारोऽपि अन्तःकरणस्याध्यवसायात्मिका या शक्तिः सैव दर्शनशक्तिरित्याह । भोजदेवस्तु दर्शनशक्तिः = रजस्तमोभ्यामनभिभूतः सात्त्विकः परिणामोऽन्तःकरणरूप इत्याह । तस्याश्च भोग्यत्वजडत्वादयो पुरुष-विलक्षणाःधर्माः सन्तीति ! फलतो नैतेषु कश्चिद्भेदः ।

दिगाकाशयोरैक्यम्—आकाशादतिरिक्तं किमपि वस्तुभूतं दिक्तत्त्वं वैशेषिकाद्यभ्युपगतं नास्ति । यथा वैशेषिकाद्यभ्युपगतं नित्यं कालतत्त्व-मिह नास्ति, किन्तु क्षण एव काल इत्येतच्छास्त्रसिद्धान्तः । तथैव नित्या दिगपि नास्ति प्रामाणिकी, लोके सामान्यतो दिग्व्यवहारा-भावात् । ये च पूर्वपश्चिमदिविशेषव्यवहारा लोके दृश्यन्ते ते च पराभ्युपगतदिगुपाधिभिरेवोपपद्यन्ते । कालाच्च दिश्ययं विशेषो यत् कालः क्षणरूप इष्यते, किन्तु दिक् सर्वथैव नेष्यते । शास्त्रेषु च यः "दिशः" इत्याकारकदिक्सामान्यव्यवहारो दृश्यते स तु पूर्व-पश्चिमादिव्यवहारनियामकैरुपाधिभिरवच्छिन्नेन आकाशेनैव बोध्यः । यदि दिग्व्यवहारमात्राद् दिक् पृथक्पदार्थः स्यात् तदा "घटस्य देशः मीनस्य देश" इत्यादिव्यवहारमात्रात् देशादिरपि पृथिवीजलादिभ्योऽतिरिक्तः पदार्थः स्यात् । किन्तु घटमीनयोः स्थित्याधारत्वेन पृथिवीजलाभ्यामेव देशव्यवहार उपपद्यते तथैव पूर्वपश्चिमनियामकोपाध्यवच्छिन्नाकाशेनैव दिक्सामान्यव्यवहार उपपादनीय इति दिगाकाशयोरैक्यमेवेति सिद्धान्तः । अतएव श्रुत्यादिषु कुत्रचिदाकाशाच्छ्रोत्रं क्वचिच्च दिशः श्रोत्रमिति समुप-

लभ्यमानं वचनं न परस्परं विरुध्यते, दिगाकाशयोरेकत्वात्।
( द्र० यो० वा० पा० ३ सू० ५२ )।

**दुःखम्**—येनाभिहताः प्राणिनस्तदुपघाताय प्रयतन्ते तद्दुःखमिति योगभाष्यम्। एतावता प्रतिकूलवेदनीयं दुःखमिति सामान्यलक्षणं सूचितं भवति। तच्च त्रिविधम्-आध्यात्मिकम् व्याधिवशात् शारीरम्, कामादिवशाच्च मानसमिति द्विप्रकारम्। आधिभौतिकं व्याघ्रादि-जनितम्। आधिदैविकम् ग्रहपीडादिजातमिति। ( द्र० यो० भा० त० वै० पा० १ सू० ३१ )।

**दृक्शक्तिः**—पश्यतीति दृक् सैव शक्तिः, शक्तिशक्तिमतोरभेदात्। तथा च पुरुष एव दृक्शक्तिरित्युच्यते। अत्र शक्तिग्रहणेन द्रष्टृत्वस्य भोक्तृत्वस्य योग्यता पुरुषे प्रतीयते। तेन प्रलयादौ भोगरूपफलोप-धानाभावेऽपि न क्षतिः।

**दृश्यम्**—प्रकाशशीलं सत्त्वम्, क्रियाशीलं रजः, स्थितिशीलं तमः, इत्येतद्गुणत्रयं सूक्ष्मस्थूलभूतेन्द्रियभावेन परिणममानं भोगापवर्ग-प्रयोजनकं दृश्यम्। एतावता सर्वं कार्यकारणात्मकं त्रिगुणात्मकं जगद् दृश्यमिति ज्ञेयम्। तथा च योगसूत्रम्—"प्रकाशक्रियास्थिति-शीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम्" पा० २ सू० १८।

एतद् गुणत्रयमेव कार्यकारणभावापन्नं दृश्यमुच्यते, नास्ति ततोऽ-तिरिक्तं दृश्यान्तरम्। एत एव च गुणा न्यायवैशेषिकाभ्यामात्मा-तिरिक्त द्रव्याष्टकरूपेण विभज्यन्ते। वेदान्तिभिस्तु मायेत्युच्यते 'मायां तु प्रकृतिं विद्यादिति, श्रुतेरिति विज्ञानभिक्षुः।' ( द्र० यो० वा० पा० २ सू० १८ )।

**दृष्टजन्मवेदनीयः कर्माशयः**—तीव्रसंवेगेन मन्त्रतपःसमाधिभिर्निर्वर्तित ईश्वरदेवतामहर्षिमहानुभावानामाराधनाद्वा परिनिष्पन्नः पुण्यकर्माशयः सद्यः = इहैव जन्मनि परिपच्यते, स दृष्टजन्मवेदनीयः।

एवं तीव्रक्लेशेन भीतव्याधितकृपणेषु विश्वासोपगतेषु वा महानुभावेषु वा तपस्विषु कृतात् पुनः पुनरपकारात् परिनिष्पन्नपापकर्माशयः सद्य इहैव जन्मनि परिपच्यते, सोऽपि दृष्टजन्मवेदनीयः। यथा नन्दीश्वरः तस्मिन्नेव जन्मनि देवत्वेन परिणतः, नहुषश्च तिर्यक्त्वेन परिणत इति। ( द्र० यो० भा० पा० २ सू० १२ )।

**दृष्टविषयः**—स्त्रियोऽन्नपानमैश्वर्यमिति दृष्टविषयः।

**दौर्मनस्यम्**—इच्छाविघाताच्चेतसः क्षोभो दौर्मनस्यम्।

**द्रव्यम्**—सामान्यविशेषसमुदायोऽत्र दर्शने द्रव्यमुच्यते। येपि वैशेषिकाः सामान्यविशेषाश्रयो द्रव्यमिति मन्यन्ते तैरपि तत्समुदायोऽनुभूयमानो नापह्नोतुं शक्यः। न वा तत्समुदायापह्नवे तदाश्रयो द्रव्यमिति भवेत्। तस्मात् सामान्यविशेषयोः समुदाय एवास्तु द्रव्यम्। न हि वयं ताभ्यां तयोः समुदायाच्चातिरिक्तं तदाधारं द्रव्यमुपलभामहे, यथा ग्रावभ्यो ग्रावसमुदायाच्च पृथग्विधं तदाधारमपरं गिरिशिखरं नोपलभामहे, तद्वत्। अतोऽत्र दर्शने सामान्यविशेषसमूह एव द्रव्यम् ( द्र० यो० भा० त० वै० पा० ३ सू० ४४ )।

**विज्ञानभिक्षुस्तु**—अत्र दर्शने सामान्यविशेषयोः समूहो द्रव्यमिति व्याचक्षाणः वैशेषिकोक्तं सामान्यविशेषाश्रयत्वं द्रव्यस्य स्वीकुर्वन् सामान्यविशेषाभेदमपि ततोऽधिकं स्वीकरोति। अतएवोक्तं तेन—अतिरिक्तावयव्यभ्युपगमेऽपि तयोरवयवावयविनोरभेदस्याप्यभ्युपगमात्। अन्यथा घटो मृत् तन्तुः पटः, शुक्लः पट इत्याद्यभेदप्रत्ययानुपपत्तेरित्याह। ( द्र० यो० वा० पा० ३ सू० ४४ )।

**द्वन्द्वानि**—सुखदुःखयोर्हेतुभूतानि शीतोष्ण, लाभालाभ, जयाजयादीनि द्वन्द्वानि सन्ति।

**द्वेषः**—दुःखमनुशेते जायते इति दुःखानुशयी द्वेषः। उक्तं च भाष्ये—दुःखाभिज्ञस्य दुःखानुस्मृतिपूर्वो दुःखे तत्साधने वा यः प्रतिघो मन्युर्जिघांसा क्रोधः स द्वेष इति। प्रतिघः = प्रतिघातात्मक इत्यर्थः। प्रतिघः = उद्वेजक इति विज्ञानभिक्षुः। भाष्ये जिघांसेति सन्नन्तवचनाद् द्वेषोऽपीच्छाविशेष एवेति।

———

**धर्मपरिणामः**—चित्ते धर्मिणि व्युत्थानधर्मस्याभिभवो निरोधस्य च धर्मस्य प्रादुर्भावो धर्मपरिणामः। एवं मृत्सुवर्णादिधर्मी पिण्डाकाराद्धर्माद् घटकटकादिरूपधर्मान्तरमुपसंपद्यमानो धर्मतः परिणमते घटाकारः कटकाकार इति। सोऽयं धर्मपरिणामः। (द्र० यो० भा० पा० ३ सू० १३)।

**धर्ममेघः**—"प्रसङ्ख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः" इति योगसूत्रम् पा० ४ सू० २९। अर्थात् यो हि योगी विवेकसाक्षात्कारमधिगत्य तत्राप्यकुसीदः सर्वभावाधिष्ठातृत्वरूपां कामपि सिद्धिं न प्रार्थयते तस्य केऽपि योगविघ्ना न जायन्ते। अतो निरन्तरं विवेकख्यातेरेवोदयात् तस्य योगिनो धर्ममेघनामा समाधिर्भवति सम्प्रज्ञातयोगस्य पराकाष्ठेति। द्रष्टव्यमत्रत्यं वार्तिकम्।

**धर्मलक्षणावस्थानां धर्मिणो नैकान्तिकभेदाभेदौ**—मृद्धर्मिणो ये धर्माः घटमल्लिकादयः, तेषां धर्माणां यानि लक्षणानि अनागतवर्तमानातीतत्वानि, लक्षणस्य च वर्तमानस्य या अवस्थाः नवपुराणत्वादयः, तासां धर्मलक्षणावस्थानां मृद्धर्मिणो नात्यन्तं भेदो नाप्यत्यन्तमभेदो भवति, किन्तु भेदाभेदौ उभावपि भवत इति सिद्धान्तः। तदुक्तं वाचस्पतिमिश्रैः—अनुभव एव हि धर्मिणो धर्मादीनां भेदाभेदौ व्यवस्थापयति। न ह्यैकान्तिकेऽभेदे धर्मादीनां (धर्मलक्षणावस्थानां) धर्मिणो धर्मिरूपवद् (धर्मिस्वरूपवत्) धर्मादित्वम् (धर्मत्वं लक्षणत्वमवस्थात्वञ्च संभवीनि) नाप्यैकान्तिके भेदे गवाश्ववद् धर्मादित्वम्।

स चानुभवोऽनैकान्तिकत्वमवस्थापयन्नपि धर्मादिषूपजनापायधर्मकेष्वपि धर्मिणमेकम् (उपजनापायरहितम्) अनुगमयन्, धर्मांश्च परस्परतो व्यावर्तयन् प्रत्यात्मम् अनुभूयत इति तदनुसारिणो (अनुभवानुसारिणो) वयं न तम् (अनुभवम्) अतिवर्त्य

स्वेच्छया धर्मानुभवान् व्यवस्थापयितुमीश्महे इति। ( द्र० यो० भा० त० वै० पा० ३ सू० १३ )।

धर्मी—"शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी" इति योगसूत्रम्। तथा च अतीतवर्तमानानागतधर्मेष्वनुपाती वर्तमानरूपेणानुगतो यो भवति स धर्मी इति। यथा मृत्सुवर्णादिश्चूर्णपिण्डघटरुचकाद्यन्वयी धर्मीत्युच्यते। ( द्र० यो० वा० पा० ३ सू० १४ )।

धारणा—नाभिचक्रे, हृदयपुण्डरीके, मूर्ध्निज्योतिषि, नासिकाग्रे जीह्वाग्रे इत्येवमादिषु देशेषु बाह्ये वा चन्द्रसूर्याग्न्यादौ ईश्वरदेवतादिध्यानदेशे, अन्यस्मिश्च शुभाश्रये हिरण्यगर्भवासवप्रजापतिप्रभृतौ चित्तस्य वृत्तिमात्रेण ( ज्ञानमात्रेण ) बन्धो धारणा। ( द्र० यो० भा० पा० ३ सू० १ )।

सूत्रोक्तं लक्षणं धारणाविशेषस्यैव प्राथमिकपरिच्छिन्नयोगाभिप्रायेणास्तीति विज्ञानभिक्षुः। अतोऽन्यदपि धारणाया लक्षणं गारुडादावुक्तम्। यथा—

प्राणायामैर्द्वादशभिर्यावत्कालःकृतो भवेत्।
स तावत्कालपर्यन्तं मनो ब्रह्मणि धारयेत्॥ इत्यादि।

इदमेव हि धारणासामान्यलक्षणम्, अन्यथा क्षणमात्रेणापि धारणापत्तेः। अतः सूत्रोक्तं विशेषलक्षणमपि प्राणायामद्वादशकालावच्छिन्नत्वेन विशेषणीयमिति। (द्र० यो० वा० पा० ३ सू० १)।

ध्यानम्—धारणाया यो देशस्तत्रैव ध्येयालम्बनस्य या एकतानता सदृशः प्रवाहः, अन्यप्रत्ययैरपरामृष्टः, तद् ध्यानमिति भाष्यम्। इदमपि देशघटितं ध्यानलक्षणं प्राथमिकौत्सर्गिकध्यानाभिप्रायेणैव, सर्वत्र ध्याने देशानियमात्। अतोऽस्य गारुडे लक्षणान्तरमुक्तम्—"तस्यैव ब्रह्मणि प्रोक्तं ध्यानं द्वादशधारणा" इति। तस्यैव द्वादशप्राणायामकालेन धारणावच्चित्तस्य द्वादशधारणावच्छिन्नं चिन्तनं ध्यानमिति विज्ञानभिक्षुः। ( द्र० यो० वा० पा० ३ सू० २ )।

धारणातो ध्यानस्यायं भेदो यत् धारणा तु तस्मिन्नेव देशे तदवस्थ-स्यैव चित्तस्य तद्विषयविकल्पितैः प्रत्ययान्तरैः परामृष्टाऽपि भवति। यथा सूर्ये धार्यमाणस्य तद्गतपरिमण्डलतीव्रतरदीधितित्वादिप्रत्य-येष्वपि धारणैव, वृत्तिमात्रेण तत्रैव चित्तस्य वर्तमानत्वात्। ध्यानन्तु न तथा, किन्तु भिन्नजातीयप्रत्ययान्तरापरामृष्टैकप्रत्ययप्रवाह एव हि ध्यानमिति भाष्यविवरणकारः। द्रष्टव्यं ध्यानसूत्रीयभाष्य-व्याख्यानम्।

**ध्यानजं चित्तमनाशयम्**—पञ्चविधं निर्माणचित्तं भवति, तद् यथो-दितम्—"जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः" यो० द० पा० ४ सू० १। एवमुदितेषु पञ्चसु सिद्धचित्तेषु ध्यानजमेव चित्तम् अपवर्गभागीयं भवति। तच्चानाशयमर्थात् कर्मवासनाभिः क्लेश-वासनाभिश्च रहितं भवति। यतो हि रागादिनिबन्धना प्रवृत्तिरस्य ध्यानजस्यानाशयस्य निर्माणचित्तस्य नास्ति। अतएव तस्य पुण्य-पापादिभिरभिसम्बन्धोऽपि नास्तीति। (द्र० भा० त० वै० पा० ४ सू० ६)।

—०—

**नव योगिनः**—उपायप्रत्यया योगिनो नवविधा भवन्ति। प्रथमन्तावत् १–मृदूपायः, २–मध्योपायः, ३–अधिमात्रोपायश्चेति त्रयः। ते त्रयोऽपि प्रत्येकं त्रिविधाः—१–मृदुसंवेगः, २–मध्यसंवेगः, ३–अधिमात्रसंवेगश्चेति नव भवन्ति। किन्तु एषु नवमस्य अधिमात्रोपायस्य-तीव्रसंवेगस्य पुनस्त्रयो भेदाः—१–अधिमात्रोपायमृदुतीव्रसंवेगः, २–अधिमात्रोपायमध्यतीव्रसंवेगः, ३–अधिमात्रोपायाधिमात्रतीव्रसंवेग-श्चेति। संकलनया एकादश भेदा वर्णिताः पातञ्जलयोगसूत्रे। एतेषु यश्चरमः अधिमात्रोपायाधिमात्रतीव्रसंवेगो योगी तस्यासन्नतमः समाधिलाभः समाधिफलं च भवतीति। ( द्र० यो० वा० पा० १ सू० २२ )।

**नाडी**— देहे द्वासप्ततिसहस्राणि नाड्यो भवन्ति। ( द्र० ह० यो० प्र० उप० ४ श्लो० १८ )।

**नित्यत्वं द्विविधम्**—नित्यता हि द्विविधा—कूटस्थनित्यता, परिणामि-नित्यता च। तत्र कूटस्थनित्यता पुरुषस्य परिणामिनित्यता गुणा-नाम्। यस्मिन् परिणम्यमाने तत्त्वं न विहन्यते तत्परिणामिनित्यम्। उभयसाधारणं नित्यत्वं तु तत्त्वानभिघात एव। तथा च पुरुषे परिणामाभावे सति तत्त्वाविघातात् कूटस्थनित्यत्वमस्ति। गुणेषु च धर्मलक्षणावस्थारूपाणां धर्माणामुदयव्ययरूपपरिणामसत्त्वेऽपि गुण-रूपस्य धर्मिणस्तत्त्वाविघात एवेति गुणाः परिणामिनित्या उच्यन्ते। ( द्र० यो० भा० त० वै० पा०४ सू० ३३ )।

**निद्रा**—जाग्रत्स्वप्नवृत्तीनामभावस्य कारणं बुद्धिसत्त्वाच्छादकं तमः, तदेवालम्बनं विषयतयास्ति यस्याः सा अभावप्रत्ययालम्बना वृत्ति-र्निद्रा। अर्थात् तथाविधतमोविषयिणी वृत्तिरेव निद्रावृत्तिरिति। त्रिगुणात्मके बुद्धिसत्त्वे यदा सत्त्वरजसी अभिभूय समस्तकरणावरकं तम आविर्भवति तदा बुद्धेर्विषयाकारपरिणामाभावात् उद्भूततमो-मयीं बुद्धिमवबुध्यमानः पुरुषः सुषुप्तो निद्रितोऽन्तःसंज्ञ इत्युच्यते।

सा च निद्रा न वृत्तिसामान्याभावरूपा किन्तु जागरणे "सुखमहमस्वाप्सम्, दुःखमहमस्वाप्सम्, गाढं मूढोऽहमस्वाप्समित्याकारकस्मरणात् प्रत्ययविशेषो = वृत्तिविशेष इति योगसिद्धान्तः। (द्र० यो० भा० त० वै० पा० १ सू० १०)।

**निरुद्धम्**—निरुद्धसकलवृत्तिकं संस्कारमात्रशेषं चित्तं निरुद्धम्।

**निरुपक्रमं कर्म**—आयुष्करं कर्म द्विविधं सोपक्रमं निरुपक्रमं च। तत्र यत् कर्म किञ्चत्कालानपेक्षमेव भोगदानाय प्रस्थितं दत्तबहुभोगमल्पावशिष्टफलं प्रवृत्तव्यापारं केवलं तत्फलस्य सहसा भोक्तुमेकेन शरीरेणाशक्यत्वाद् विलम्बते, तत् सोपक्रमम्। उपक्रमो व्यापारस्तत्सहितमित्यर्थः। किन्तु तदेव दत्तस्तोकफलं तत्कालमपेक्ष्य फलदानाय व्याप्रियमाणं कादाचित्कमन्दव्यापारं निरुपक्रमम्। (द्र० यो० भा० त० वै० पा० ३ सू० २२)।

तीव्रवेगेन फलदातृ आयुष्करं कर्म सोपक्रमं, मन्दवेगेन फलदातृ आयुष्करं कर्म निरुपक्रममिति विज्ञानभिक्षुः। (द्र० यो० वा० पा० ३ सू० २२)।

**निरोधपरिणामः**—व्युत्थानं सम्प्रज्ञातः, असम्प्रज्ञातापेक्षया तस्यापि व्युत्थानत्वात्, निरोधः = परवैराग्यम्। तथा च व्युत्थानसंस्कारस्याभिभवो निरोधसंस्कारस्याविर्भावश्च यदा भवतः, तदा चित्तस्य धर्मिणो निरोधक्षणस्य द्वयोरवस्थयोरन्वयो भवति। नहि चित्तं धर्मि संप्रज्ञातावस्थायामसम्प्रज्ञातावस्थायां च संस्काराभिभवप्रादुर्भावयोः स्वरूपेण भिद्यते। तथा चैकस्य चित्तस्य धारावाहिकरूपेण निरोधक्षणान्वय एव निरोधपरिणाम इति वाचस्पतिमिश्राः। (द्र० यो० भा० त० वै० पा० ३ सू० ९)।

अत्राह विवरणकारः—एकस्य चित्तस्य प्रतिक्षणमिदं व्युत्थानसंस्काराभिभवेन निरोधसंस्कारप्रादुर्भावेन च संस्कारान्यथात्वं भवति। निरोधकालीनं तच्चित्तं तौ संस्कारद्वयाभिभवप्रादुर्भावौ

धर्मित्वेन अन्वेति। तत्र तयोरभिभवप्रादुर्भावयोश्चित्तेन योऽनुगमः स एव चित्तस्य निरोधपरिणामः। यद्यपि व्युत्थानसंस्काराणामपि हीयमानतया तदानीं सम्बन्धोऽस्त्येव तथापि प्रादुर्भवताऽतएव बलवता निरोधसंस्कारेणैव निरोधपरिणाम इति समाख्या जातेति ( द्र० यो० सू० भा० वि० पा० ३ सू० ९ )। व्युन्थानं सम्प्रज्ञातः, स निरुध्यते येन, तत् परवैराग्यं निरोधः। तत्र यदा व्युत्थानसंस्कारस्याभिभवो निरोधसंस्कारस्य प्रादुर्भावश्च भवतस्तदा निरोधसंस्कारस्यासंप्रज्ञातस्य क्षणेनावसरेण युक्तं चित्तं भवति। तस्य निरोधक्षणस्य चित्तस्य धर्मिणः त्रिगुणत्वेन चलस्य सदा परिणामशीलस्याभिभूतप्रादुर्भूतयोः संस्कारयोर्धर्मित्वेन योऽन्वयः स निरोधाख्यः परिणाम इति मणिप्रभाकारः।

**निर्माणकायः**—योगबलेन योगिना अनेके काया निर्मीयन्ते। स निर्माणकायः।

**निर्माणचित्तम्**—योगबलेन स्वसङ्कल्पनिर्मितं चित्तं निर्माणचित्तम्। तच्च निर्माणचित्तं पञ्चविधं भवति। जन्मजातम्, ओषधिजं, मन्त्रजं, तपोजन्यं, समाधिजं चेति। ( द्रष्टव्यम् या० भा० पा० ४ सू० ६ )।

यदा योगिना एकदैव नाना काया निर्मीयन्ते तदा प्रतिकायं चित्तापेक्षणात् निर्माणचित्तान्यपि अनेकानि करोति योगी। न च अनेकचित्तत्वे सर्वेषां चित्तानामेकाभिप्रायानुरोधः परस्परप्रतिसन्धानञ्च कथं स्यातामिति शङ्कनीयम् सर्वेषां चित्तानां प्रवृत्तिविशेषे प्रयोजकस्य एकस्य चित्तस्यापरस्य निर्माणात्। ( द्र० यो० भा० त० वै० पा० ४ सू० ४-५ )। तानि च निर्माणचित्तानि अस्मितामात्रात् उपादानकारणात् निर्मीयन्ते। अस्मिता = अहङ्कारः। मात्रपदेन मनसो व्यावृत्तिः। निर्माणचित्तेषु मनः सङ्कल्पमात्रेण निमित्तमात्रं भवति नोपादानम्। निर्माणचित्तवत् निर्माणबुद्धयो निर्माणा-

ऽङ्काराश्चापि अनेके स्वस्वप्रकृतिभूतप्रधानबुद्ध्यापूराद् भवन्ति युक्तिसाम्यात् । एवं कदाचिदेकेनैव चित्तेन योगिनो नानादेहेषु व्यवहारं कर्तुं क्षमन्ते इत्यपि स्वीकरणीयम्, स्वतन्त्रेच्छस्य नियन्तुमशक्यत्वादिति विज्ञानभिक्षुः । ( द्र० यो० वा० पा० ४ सू० ४ ) ।

**निर्विचारा समापत्तिः**—अतीनागतवर्तमानधर्मानवच्छिन्नेषु नील-पीतादिप्रकाररहितेषु सर्वदेशकालनिमितानुभवैरनवच्छिन्नेषु कारणतया सर्वधर्मा ( कार्यं ) नुपातिषु भेदाभेदाभ्यां सर्वधर्मात्मकेषु भूतसूक्ष्मेषु तन्मात्रोत्पन्नपरमाणुषु या स्वरूपशून्येवार्थमात्रनिर्भासा तत्स्थतदञ्जनतारूपा चित्तस्य समापत्तिः सा निर्विचारा समापत्तिः । ( द्र० यो० मा० त० वै० पा० १ सू० ४४ ) । अत्र भूतसूक्ष्मेषु = तन्मात्रेष्विति विवरणकारः ।

**निर्वितर्का समापत्तिः**—यथा निर्विचारा समापत्तिः सूक्ष्मविषया तथैव निर्वितर्का समापत्तिरपि स्थूलविषया भवति । तथा च योगसूत्रम्–"स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का" पा० १ सू० ४३ ।

**निर्वीजसमाधिः**—परेण वैराग्येण ज्ञानप्रसादमात्रलक्षणेन निरोधसंस्कारोपजननद्वारा प्रज्ञया सहैव प्रज्ञाकृतसंस्कारस्यापि निरोधः । अर्थात् सर्वस्योत्पद्यमानस्य संस्कारप्रज्ञाप्रवाहस्य निरोधात् कारणाभावेन कार्यानुत्पादात् निर्बीजः समाधिरिति । ( द्र० यो० मा० त० वै० पा० १ सू० ५१ ) ।

**निःसत्तासत्तमव्यक्तम्**—सत्ता = पुरुषार्थक्रियाक्षमत्वम्, असत्ता = तुच्छत्वम् । निष्क्रान्तम् सत्ताया असत्तायाश्च यत् तत् निःसत्तासत्तम् ।

**अयमर्थः**—सत्त्वरजस्तमसां साम्यावस्था प्रकृतिरव्यक्तं न क्वचित् पुरुषार्थे उपयुज्यते इति दृष्ट्या न सती प्रकृतिः । नापि गगन-

कमलिनीव तुच्छस्वभावा, तेन न असत्यपि। अतोऽव्यक्तम् निःसत्तासत्तमिति गीयते।

**निःसदसदव्यक्तम्**—निष्क्रान्तं कारणं सतः = कार्यादिति निःसत् अव्यक्तम्, कार्यरहितमित्यर्थः। यद्यपि कारणावस्थायामपि महदादि-कार्यं शक्त्यात्मना तस्मिन्नव्यक्ते सदेवास्ति तथापि स्वोचितामर्थ-क्रियामकुर्वद् असदित्युक्तम् इति दृष्ट्या निःसदव्यक्तम्। एवं कारण-स्याव्यक्तस्य महदादिकार्यं शशविषाणायमानमपि नास्तीति दृष्ट्या-निरसदव्यक्तम्। निष्क्रान्तमसतः तुच्छरूपात् कार्यादिति तस्यार्थः। अव्यक्तावस्थायां यदि महदादिकार्यं व्योमारविन्दमिव स्यात्तदा नाव्यक्तात् कदाचिदुत्पद्येतेति। तस्मात् निःसदसदव्यक्तम्। (द्र० यो० भा० त० वै० पा० २ सू० १९)।

—०—

**परचित्तज्ञानम्**—प्रत्ययस्य = रागादिमत्याः स्वकीयचित्तवृत्तेः संयमेन आश्रयादिरूपाशेषविशेषैः साक्षात्करणात् ततः तस्माच्चित्तात् परस्य भिन्नस्य चित्तान्तरस्यापि अशेषविशेषतो ज्ञानं सङ्कल्पमात्रेणैव भवतीति विज्ञानभिक्षुः। (द्र० यो० वा० पा० ३ सू० १९)।

विवरणकारस्तु—परप्रत्यये = परकीयचित्तवृत्तौ सयमेन परप्रत्ययस्य साक्षात्करणम्, तत्साक्षात्करणे च तत्सम्बन्धिनः परचित्तस्य ज्ञानं भवतीत्याह। प्रत्ययस्य = परचित्तस्य केनचिद् मुखरागादिना लिङ्गेन गृहीतस्य, यदा संयमं करोति, तदा परचित्तस्य ज्ञानमुत्पद्यते, सरागमस्य चित्तं विरागं वेति परचित्तगतान् सर्वानपि धर्मान् जानातीति भोजवृत्तिः।

अत्र नागेशभट्ट आह—यथा संस्कारसाक्षात्कारे सति तद्विषयादिकमपि विषयीक्रियते, तथा परचित्तसाक्षात्कारेऽमुकविषयकरागवानयमिति विषयज्ञानं न जायते संयमविषयेण स्वचित्तेन परचित्तालम्बनस्याविषयीकरणात्, तत्प्रतिपादकशास्त्राभावात्। तत्र रागवदस्य चित्तं विरागं वेत्येव ज्ञानादिति। (द्र० पा० सू० वृ० पा० ३ सू० १९)।

**परमबन्धपरममुक्ती**—बुद्धेरेव परमो = मुख्यो बन्धो मोक्षश्च पुरुषे व्यपदिश्येते, स हि तत्फलस्य मोक्तेति। भोगोऽपवर्गश्चेति द्वौ पुरुषार्थौ, तयोरपरिसमाप्तिरेव बन्धः, स च बुद्धेरेव धर्मः, तयोर्बुद्धिकृतत्वात्, बुद्ध्यैव करणीयत्वाच्च। तथा च बुद्धिकृतौ भोगापवर्गौ बुद्धेरेव धर्मौ। एवं पुरुषार्थावसायो = विवेकख्यात्या भोगापवर्गरूपपुरुषार्थसमाप्तिरेव मोक्षः। अयं मोक्षोऽपि बुद्धेरेव धर्मो विवेकख्यातिमत्या बुद्ध्यैव कृतत्वात्।

तथा च भोगापवर्गरूपैः पुरुषार्थैः सम्बन्धो बुद्धेर्बन्धः, तैर्वियोगश्च बुद्धेर्मुक्तिरिति। एतौ एव बुद्धेः परमबन्धपरममुक्ती स्तः। भोगापवर्गौ तु बन्धमुक्तिभ्यां भिन्नौ मन्तव्यौ। तत्र इष्टानिष्टगुण-

स्वरूपावधारणमावमागापन्नं भोगः, भोक्तुः स्वरूपावधारणमपवर्गः। अयमर्थः—इष्टानिष्टगुणाः सुखदुःखात्मकाः शब्दादयः, तत्स्वरूपावधारणं=तदाकारा बुद्धिवृत्तिरेव अविभागापन्ना अर्थात् अहङ्कारेण ममेत्यात्मनिष्ठतयाऽभिमन्यमाना सती भोगः। सोऽपि बुद्धेरेव धर्मो न पुरुषस्य, वृत्तेर्बुद्धिधर्मत्वात्। एवं भोक्तुः पुरुषस्य यत् स्वरूपावधारणम् अर्थात् उपाधिविविक्तचैतन्याकारा बुद्धिवृत्तिः सैव अपवर्गः। सोऽपि बुद्धेरेव धर्मः, पुरुषाकारवृत्तेरपि बुद्धिधर्मत्वात्।

अतो भोगापवर्गौ बुद्धिधर्मौ, तदतिरिक्तौ बन्धमोक्षावपि बुद्धिधर्मौ इति। भवति चात्र पञ्चशिखवाक्यं प्रमाणम्। यथा—

"आद्यस्तु मोक्षो ज्ञानेन द्वितीयो रागसंक्षयात्।
कृच्छ्रक्षयात् तृतीयस्तु व्याख्यातं मोक्षलक्षणम्॥" इति।
(द्र० यो० भा० तथा यो० वा० पा० २ सू० १८)।

**परमाणुः**—लोष्टस्य हि प्रविभज्यमानस्य यस्मिन्नवयवेऽल्पत्वतारतम्यं व्यवतिष्ठते सोऽपकर्षपर्यन्तः परमाणुः। (द्र० यो० भा० त० वै० पा० ३ सू० ५२)।

अत्र विज्ञानभिक्षुः—'अत्र दृष्टान्तादिना परसूत्रेण च साक्षादेवाचार्येण परमाणुवचनात् वैशेषिकोक्तपरमाणवोऽप्यस्माभिरभ्युपगम्यन्ते। ते चास्मद्दर्शने गुणशब्दवाच्या इत्येव विशेषः। न चात्रत्यभाष्ये पृथिव्यादिभूतपरमाणुरेव परमाणुशब्दार्थो युक्त इति वाच्यम् परमाणुविशेषणतयोक्तस्य द्रव्यशब्दस्य पृथिव्यादिभूतात्मकविशेषपरत्वे प्रमाणाभावात्। सावयवस्य पृथिव्यादिपरमाणोः निरवयवकालपरमाणुदृष्टान्तत्वानुपपत्तेश्च। यद्यपि प्रकृतेर्विभुत्वेन तदभिन्नगुणानामणुपरिमाणत्वरूपं परमाणुत्वं न संभवि तथापि दर्शनेऽस्मिन् अन्तःकरणानामाकाशस्य च हेतवो ये गुणास्तेषामेव विभुत्वाङ्गीकारात्। न खलु सर्वगुणानां विभुत्वमिह स्वीक्रियते, तथा सति आद्यपरिणामहेतुभूतक्षोभसंयोगाद्यसंभवात्। तस्मात् सिद्धं यदणु-

परिमाणा अपि गुणाः सन्तीति, गुणा एव च परमाणवः सन्तीति चेति । न्यायवैशेषिकवत् तेषु परमाणुषु पृथिवीत्वादिकं नास्ति, गुणेषु पृथिवीत्वाद्यभिव्यञ्जकगन्धाद्यनङ्गीकारादिति सिद्धान्तः । (द्र० यो० वा० पा० ३ सू० ५२) ।

**परवैराग्यम्**—परमात्मजीवात्मनोरन्यतरसाक्षात्काराभ्यासाद् हेतोरुत्पद्यमानं सकलगुणेषु वैतृष्ण्यं परं वैराग्यम् । अपरवैराग्ये वशीकाराख्ये विषयदोषदर्शनात् विषयेष्वेव वैराग्यं न तु ज्ञानेऽपि । अविद्यानिवृत्त्याख्यप्रयोजनसिद्धये ज्ञानस्यापेक्षिततत्वेन ज्ञानेऽलंबुद्धिरूपवैराग्यासंभवादिति । (द्र० यो० वा० पा० १ सू० १६) ।

**परशरीरावेशः**—स्वभावलोलं मनोऽप्रतिष्ठं सदपि यत्कर्माशयवशात् शरीरे बद्धं भवति, बन्धकारणस्य तस्य कर्मणः समाधिबलात् शैथिल्यं जायते, तथा समाधिबलादेव चित्तस्य गमनागमनमार्गाणां संवेदनमपि जायते । तेन योगी चित्तं स्वशरीरान्निष्कृष्य परशरीरे निक्षिपति । चित्तमनु इन्द्रियाण्यपि परशरीरे प्रविशन्ति । (द्र० यो० भा० त० वै० पा० ३ सू० ३८) ।

**परिणामः**—अवस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिः परिणामः । अत्र धर्मशब्द आश्रितत्वेन धर्मलक्षणावस्थानां वाचकः । तेन पूर्वधर्मलक्षणावस्थानां निवृत्तौ अन्यधर्मलक्षणावस्थानामवस्थिते द्रव्ये उत्पत्तिः परिणाम इति निष्कर्षः । (द्र० यो० भा० त० वै० पा० ३ सू० १३) ।

**परो वशीकारः**—अभ्यासात् परिकर्मितचेता योगी यदा स्वमनः सूक्ष्मे निवेशयितुमिच्छति तदा परमाणुपर्यन्तमिदं स्थितिं लभते । यदा च स्थूले निवेशशयितुमिच्छति तदा परममहत्त्वान्तं स्थितिपदं लभते । अर्थात् यथेच्छं सूक्ष्मतमं स्थूलतमं च चित्तं भवति । एवं ताममुभयीं कोटिमनुधावतोऽस्य चित्तस्य योऽप्रतिघातः, स परो वशी-

कारो वशीकारसंज्ञारूपाद् प्रसिद्धादुत्कृष्ट इति। ( द्र० यो० मा० पा० १ सू० ४० )।

अत्र परमाण्वादौ धारणात्रयो भवति—संक्षिप्ता, विशाला, विकरणी चेति। तत्रोभयकोटिस्पर्शिनो विकरणा। परममहत्त्वान्तस्पृग् विशाला परमाण्वन्तस्पृक् संक्षिप्तेति विवरणकारः। ( द्र० पा० यो० सू० वि० पा० १ सू० ४० )।

**परं प्रसंख्यानम्**—चित्तं यदा रजोलेशादपि मलादपेतं सत् स्वरूपप्रतिष्ठं भवति, तदाऽस्य सत्त्वपुरुषान्यताख्यातिमात्रं कार्यमवशिष्यते। तदानीं धर्ममेघनामकध्यानोन्मुखं च चित्तं भवति। तस्यैव परं प्रसंख्यानमित्याख्या ध्यायिनामिति। ( द्र० यो० मा० त० वै० पा० १ सू० २ )।

**पिङ्गला**—दक्षनाडी ( दक्षिणनाडी )।

**पुरुषज्ञानम्**—प्रख्याशीलं हि बुद्धिसत्त्वं रजस्तमसी वशीकृत्य विवेकख्यातिरूपेण परिणतं भवति। तस्माच्च परिणामशीलात् बुद्धिसत्त्वात् अत्यन्तविधर्मा शुद्धः अन्यश्चितिमात्ररूपः पुरुषोऽस्ति। अतस्तौ सत्त्वपुरुषौ परस्परमत्यन्तासंकीर्णौ स्तः। तथापि शान्तघोरमूढरूपायां बुद्धौ चैतन्यं प्रतिबिम्बितं भवत् स्वयमपि शान्तघोरादिरूपमिव भवति यथा कम्पमाने जले प्रतिबिम्बितश्चन्द्रः स्वयमपि सकम्प इव भवति न तु वस्तुतः सकम्पः। अयमेव बुद्धिपुरुषयोः प्रत्ययाविशेषरूपो भोगः। स च भोगः परार्थः, सत्त्वस्य परार्थत्वेन तद्धर्मो भोगोऽपि परार्थ एवास्तीति तस्मात् परार्थभोगात् यो विशिष्टः चितिमात्ररूपोऽन्यः पौरुषेयः प्रत्ययस्तत्र संयमात् पुरुषविषयंज्ञानं भवतीति। (द्र० यो० मा० त० वै० पा० ३ सू० ३५)।

अत्र विज्ञानभिक्षुः—बुद्धेः प्रत्ययः सुखादिमती विषयाद्याकारचित्तवृत्तिः, पुरुषस्य प्रत्ययो बुद्धिवृत्तिप्रतिबिम्बावच्छिन्नचैतन्यांशः सुखाद्यात्मकशब्दाद्यनुभवनामा। तयोरविवेकश्च बुद्ध्या पुरुषे स्वप्रति-

बिम्बार्पणेन जपास्फटिकयोरिव धर्मसांकर्यात्। तथा च पुरुषे एव बुद्धिवृत्तिप्रतिबिम्बो न तु बुद्धौ चित्प्रतिबिम्ब इत्याह। शेषं समानम्। द्र० यो० वा० पा० ३ सू० ३५)।

**पुरुषेऽन्वयिकारणत्वाभावः**—यद्यपि पुरुषार्थो महदहङ्कारादीना-मुत्पत्तौ निमित्तं भवतीति पुरुषोऽपि प्रकृतिवत् कारणतया महदा-दीनां सूक्ष्मं रूपं स्यात् तथापि पुरुषे महदादीन् प्रति अन्वयि-कारणत्वम् (उपादानत्वं) नास्तीति न पुरुषो महदादीनां सूक्ष्मं रूपं किन्तु प्रकृतिरेवेति। (द्र० यो० भा० त० वै० पा० १ सू० ४५)।

**पूरकः**—यत्र बाह्यो वायुराचम्यान्तर्धार्यते स पूरकः प्राणायामः।

**पूर्वजातिज्ञानम्**—स्मृतिहेतवोऽनुभवजन्या ये संस्काराः येचाविद्यादि-क्लेशानां हेतुभूता अविद्यादिसंस्काराः, अथ च जात्यायुर्भोगरूप-विपाकस्य हेतुभूता ये धर्माधर्मरूपाः संस्काराः तेषां संयमात् सा-क्षात्कारे सिद्धे पूर्वजन्मानुभूतानां जात्यादीनां ज्ञानं भवतीति। (द्र० यो० भा० त० वै० पा० ३ सू० १८)।

**प्रकृतिप्रवृत्तौ धर्मादीनामहेतुत्वम्**—प्रकृतेः प्रवृत्तौ धर्मादयो न प्रयो-जकाः भवन्ति, तेषां प्रकृतिकार्यत्वात्। न हि कार्यं कारणं प्रयो-जयति, तस्य कारणाधीनोत्पत्तितया कारणपरतन्त्रत्वात्, स्वतन्त्रस्यैव च प्रयोजकत्वात्। धर्मादीनामुपयोगस्तु प्रतिबन्धापनयनमात्रेणैव भवति, यथा क्षेत्रिको नापः पाणिनाऽपकर्षति किन्तु आवरणमेव भिनत्ति, तद्वत्। अतः प्रकृतिः स्वयमेव पुरुषार्थाय पवर्तत इति। (द्र० यो० भा० त० वै० पा० ४ सू० ३)।

**प्रकृतिलयत्वम्**—ये प्रकृतिमेवात्मानमभिमन्यमाना प्रकृत्युपासकाः साधिकारायामेव प्रकृतौ लीनास्ते प्रकृतिलया इत्युच्यन्ते। प्रकृति-लयानां विदेहेभ्योऽयं भेदो यत् विदेहाः सावरणब्रह्माण्डान्तर्गता एवा-ल्पमैश्वर्यं मलिनं च विषयं भुञ्जते, प्रकृतिलयास्तु ब्रह्माण्डाद

वहिर्गत्वा विदेहान् प्रत्यपि ईशते तत्रैव निर्मलं कारणसत्त्वनिर्मितं विषयञ्च भुञ्जाना ईश्वरकोटय उच्यन्त इति। ( द्र० यो० मा० त० वै० तथा यो० वा० पा० १ सू० १५ )।

**प्रकृतेः क्षोभहेतुः**—परमेश्वरप्रयत्नेनैव गुणवैषम्यं भवति, तत्परेणेरितं विषमत्वं प्रयातीति श्रुतेः। तथा "प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः। क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ॥" इति प्रमाणात् प्रकृतेर्वैषम्यहेतुः क्षोभोऽपीश्वरेच्छात एव भवति। सा च परमेश्वरेच्छा सदैवाप्रतिहता नित्या महाप्रलयेऽप्यस्तीति विज्ञानभिक्षुः। ( द्र० यो० वा० पा० १ सू० २४ )।

**अत्र वाचस्पतिमिश्राः**—ज्ञानक्रिये सर्गहेतुभूते अपरिणामिन्यां चिच्छक्तौ न संभवत इति रजस्तमोरहितचित्तसत्त्वाश्रये एव ते वक्तव्ये। यद्यपि सदामुक्तस्येश्वरस्याविद्याप्रभावेण तादृशचित्तसत्त्वसमुत्कर्षेण सह स्वस्वामिभावः सम्बन्धो न संभवति, अतो ज्ञानक्रियाश्रयीभूततादृशचित्तसत्त्वाभावात् ज्ञानक्रियाप्रयुक्तः सर्गो न संभवति तथापि नेश्वरस्य पृथग्जनस्येवाविद्यानिबन्धनः चित्तसत्त्वेन स्वस्वामिभावोऽभ्युपगम्यते किन्तु तापत्रयपरीतजन्तूनामुद्दिधीर्षया भगवान् सर्गादौ चित्तसत्त्वमुपादत्ते। यद्यपि उद्दिधीर्षाऽपि प्राकृतत्वात् प्रलयावस्थायां न संभवति तथापि अनादौ सर्गसंहारप्रबन्धे सर्गान्तरसमुत्पन्नसंहारेच्छावधिसमये पूर्णे मया पुनः सर्गार्थं सत्त्वप्रकर्ष उपादेय इति प्रणिधानं कृत्वा भगवान् जगत् संजहार। तदा च पूर्वसर्गीयेश्वरचित्तसत्त्वं प्रणिधानवासनावशात् तथैवेश्वरचित्तसत्त्वभावेन परिणमते। यथा चैत्रः श्वः प्रातरेवोत्थातव्यं मयेति प्रणिधाय सुप्तः सन् तदैवोत्तिष्ठते प्रणिधानसंस्कारात्। तथा च बीजाङ्कुरवदनादित्वात् ईश्वरप्रणिधानसत्त्वोपादाने उभे अपि शाश्वतिके इति नान्योन्याश्रयदोषोऽपि। तथा च महाप्रलयकाले नेश्वरस्य चित्तसत्त्वं तिष्ठति न वा तदाश्रिते ज्ञानक्रिये अपि तिष्ठत इति।

द्र० त० वै० पा० १ सू० २४ )। मिश्रमतानुसारम् प्रकृतौ क्षोभ-जननार्थं महाप्रलयेऽपि वर्तमाना भगवतो नित्येच्छा नाङ्गीकरणीयेति विशेषः।

**प्रकृतेरेकत्वम्**—यद्यपि प्रकृतिर्गुणत्रयात्मिका तथापि एकैव प्रकृतिरिति सिद्धान्तः। पुरुषभेदेन सर्गभेदेन च भेदाभावः प्रकृतेरेकत्वम् "अजामेकाम्" इत्यादिवाक्यैः प्रतिपाद्यते। ( द्र० यो० वा० पा० २ सू० १८ )।

**प्रकृतेरेव क्षोभो न पुरुषस्य**—चलनादिक्रियारूपक्षोभः प्रकृतेरेव भवति। "प्रधानात् क्षोभ्यमाणाच्च तथा पुंसः पुरातनात्।
प्रादुरासीन्महद्बीजं प्रधानपुरुषात्मकमिति स्मृतेः। यच्च प्रकृतेरक्रियत्वमुक्तं तत्तु अध्यवसायाभिमानादिरूपप्रतिनियतकार्यशून्यत्वमेव, न तु चलनादिकर्मशून्यत्वम्। यत्तु क्वचित् पुरुषस्यापि क्षोभः श्रूयते स संयोगोन्मुखत्वेन गौणः, प्रकृतिकर्मणैवोभयोः संयोगोत्पत्तेः। ( द्र० यो० वा० पा० २ सू० १८ )।

**प्रकृतेः स्वातन्त्र्यम्**—प्रकृतिः स्वतन्त्रा, धर्माधर्मौ तु प्रकृतिकार्ये प्रतिबन्धकमपनयतो न तु प्रकृतिं प्रयोजयतः। एवमाकाशे द्रव्यानारम्भिकापि अनुक्षणमणूनां क्रिया सर्वसम्मता। न च तत्र धर्माधर्मौ कारणं भवतः, तस्याः क्रियायाः कस्यापि भोगाहेतुत्वात्। नापि तत्रेश्वरादिसङ्कल्पादिः कारणम्, गौरवात्। अतो निरन्तरमणुक्रियोपपत्तये लाघवेन गुणत्वेनैव सामान्यतः प्रवृत्तिकारणत्वात् सहकार्यप्रयुक्ता प्रकृतिरेव परिणामे स्वतन्त्रा कारणमिति। ( द्र० यो० वा० पा० ४ सू० ३ )।

**प्रकृत्यापूरः**—प्रकृतीनामवयवानुप्रवेश एव प्रकृत्यापूरः। यथा कायस्य प्रकृतिः पृथिव्यादीनि भूतानि। अतः योगिसङ्कल्पात् तस्मिन् काये परिणामान्तरजनने पृथिव्यादीनामवयवानुप्रवेशो भवति, स एव प्रकृत्यापूरः। ( द्र० यो० भा० त० वै० पा० ४ सू० २ )।

**प्रख्या**—तत्त्वज्ञानम् ।

**प्रच्छर्दनम्**—कौष्ठ्यस्य वायोर्नासिकापुटाभ्यां योगशास्त्रविहितात् प्रयत्नविशेषाद् बहिर्वमनं प्रच्छर्दनम् । द्र० यो० भा० त० वै० पा० १ सू० ३४ ) ।

**प्रज्ञा**—जीवब्रह्मान्यतरात्मतत्त्वसाक्षात्कारः प्रज्ञेति विज्ञानभिक्षुः । द्र० यो० वा० पा० १ सू० २० ) । प्रज्ञा = बुद्धिरिति विवरणकारः । पुरुषगोचरख्यात्यभ्यास इति मणिप्रभावृत्तिः ।

**प्रज्ञाऽऽलोकः**—समाधिगतप्रज्ञायाः प्रत्ययान्तरानभिभवेन निर्मलप्रवाहेऽवस्थानमेव प्रज्ञाऽऽलोकः । ( द्र० यो० भा० त० वै० पा० ३ सू० ५ ) ।

प्रज्ञाया आलोको दीप्तिर्वृद्धिरिति विज्ञानभिक्षुः ।

**प्रज्ञासंस्कारप्रयोजनम्**—समाधिजप्रज्ञाजन्याः संस्काराः भोगाधिकारपरिपन्थिनो भवन्तीति भोगाधिकारप्रशान्तिरेव प्रज्ञासंस्काराणां प्रयोजनम् । ( द्र० यो० भा० त० वै० पा० १ सू० ५० ) ।

**प्रणवः**—ओंकारः ईश्वरस्य वाचकं नाम । तथा च योगसूत्रम् "तस्य वाचकः प्रणवः" इति । ( पा० १ सू० २७ ) ।

**प्रणवार्थचिन्तनस्य द्वैविध्यम्**—प्रणवार्थचिन्तनं मुख्यतया द्विविधम्—तत्रैकमंशांशि-कार्यकारण-शक्तिशक्तिमदादिभेदेन तप्तायःपिण्डवत् अविभागलक्षणैकीभावात् "अहं ब्रह्म सर्वं खलु ब्रह्म" इत्यादिरूपं भवति । अपरं च प्रकृति-तत्कार्य-पुरुषेभ्यो विवेकेन केवले ब्रह्मचिन्मात्रे आत्मत्वचिन्तनम् इति विज्ञानभिक्षुः । ( द्र० यो० वा० पा० १ सू० २८ ) ।

**प्रणिधानम्**—मानसो वाचिकः कायिको भक्तिविशेषःप्रणिधानमिति वाचस्पतिमिश्राः । ( द्र० यो० भा० त० वै० पा० १ सू० २३ ) । असंप्रज्ञातकारणीभूतसमाधिर्भावनाविशेषः प्रणिधानमिह विवक्षितम् ।

तच्च प्रणवजपेन सह ब्रह्मध्यानमेवेति विज्ञानभिक्षुः। (द्र० यो० वा० पा० १ सू० २३–२८)।

**प्रतिक्षणपरिणामेऽपि क्षणिकत्वाभावः**—प्रतिक्षणपरिणामेऽपि धर्मिणि न क्षणिकत्वमायाति। यतो हि धर्मिणि सत एव धर्मस्य यदा अतीताद्यवस्थात्रयं भवति तदानीं धर्मिणो धर्मान्यथात्वमेव भवति न द्रव्यान्यथात्वम् स्वरूपान्यथात्वं वा। तथात्वे प्रतिक्षणं परिणामेन क्षणिकत्वापत्त्या प्रत्यभिज्ञाद्यनुपपत्तिः स्यात्। अत एव प्रत्यभिज्ञा-बलेन कटककुण्डलादिसर्वविकारानुगं सुवर्णसामान्यमेकं सिध्यति। सुवर्णसामान्यश्चावयविरूपा धर्मीति। (द्र० यो० वा० पा० ३ सू० १३)।

**प्रतिप्रसवः**—कार्यस्य कारणभावापत्तिः प्रतिप्रसव इति वाचस्पति-मिश्राः। (द्र० यो० भा० त० वै० पा० २ सू० १०)।
प्रसवाद् विरुद्धः प्रतिप्रसव प्रलय इति विज्ञानभिक्षुः। प्रतिलोम-परिणामः प्रतिप्रसव इति भोजवृत्तिः।

**प्रतिबिम्बम्**—दर्पणे मुखप्रतिबिम्बवत् स्वच्छायां बुद्धौ सन्निहित-पुरुषस्य प्रतिबिम्बं भवति। एवं दर्पणगतमालिन्यस्य मुखेऽभिमानवत् बुद्धिवृत्तेस्तदारूढविषयस्य च बोधो भवति पुरुषस्येति बुद्धावेव चित्प्रतिबिम्बो न तु चित्यपि बुद्धिप्रतिबिम्ब इति वाचस्पतिमिश्राः। (द्र० यो० भा० त० वै० पा० १ सू० ४)।

विज्ञानभिक्षुस्त्वाह—चेतनेऽपि बुद्धिप्रतिबिम्बमवश्यं स्वीकार्यम्। अन्यथा कूटस्थनित्यविभुचैतन्यस्य सर्वसम्बन्धात् सदैव सर्वं वस्तु सर्वैर्ज्ञायेत, न हि सूर्यसम्बन्धे सति घटाद्यप्रकाशो दृष्ट इति। अतोऽ-र्थमानस्य कादाचित्कत्वाद्युपपत्तयेऽर्थाकारतैव पुरुषस्याप्यर्थग्रहणमिति वाच्यम्, यथा बुद्धेरर्थाकारतैवार्थग्रहणमिति दृश्यते। अर्थात् यथा बुद्धिरर्थाकारतां धारयतीत्येव तस्या अर्थग्रहणमित्युच्यते तथा पुरुषोऽपि अर्थाकारतां धारयतीत्येव तस्यापि अर्थग्रहणम् (अर्थबोधः)

इति मन्तव्यम् । सा चार्थाकारता बुद्धौ परिणामरूपा न तु प्रतिबिम्ब-रूपा, स्वप्नादौ विषयाभावेन बुद्धौ तत्प्रतिबिम्बासंभवात् । पुरुषे तु प्रतिबिम्बरूपैवार्थाकारता । पुरुषस्यापरिणामित्वेन विद्यमानवृत्तिमात्रग्राहके पुरुषे सविषयबुद्धिवृत्तिप्रतिबिम्बेनैवार्थाकारतोपपत्तेः । एवं बुद्धावपि चित्प्रतिबिम्बं स्वीकार्यमन्यथा चैतन्यस्य मानानुपपत्तेः । स्वयं साक्षात् स्वदर्शने कर्मकर्तृविरोधेन बुध्यारूढतयैवात्मनो घटादिवज्ज्ञेयत्वाभ्युपगमात् । तथाचोभयत्रैवोभयस्य प्रतिबिम्बं भवतीति । ( द्र० यो० वा० पा० १ सू० ४ ) ।

प्रत्यक्चेतनः—प्रतीपं विपरीतमञ्चति विजानातीति प्रत्यक्, सचासौ चेतनश्चेति प्रत्यक्चेतनोऽविद्यावान् पुरुषः । (द्र० यो० भा० त० वै० पा० १ सू० २९ ) ।

विज्ञानभिक्षुस्तु—प्रति=प्रतिवस्तु, अञ्चति=अनुगच्छतीति व्युत्पत्त्याऽसङ्कुचितसर्वानुगतः परमात्मैव मुख्यः प्रत्यक्शब्दार्थः । विभुत्वगुणयोगात् जीवे गौणः प्रत्यक् शब्द इति । ( द्र० यो० वा० पा० १ सू० २९ ) ।

प्रत्यक्षम्—इन्द्रियप्रणालिकया चित्तस्य बाह्यवस्तूपरागात् तद्विषया सामान्यविशेषात्मनोऽर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षं प्रमाणम् । तत्फलीभूतोऽविशिष्टः पौरुषेयश्चित्तवृत्तिबोधश्च प्रत्यक्षप्रमा । ( द्र० यो० वा० पा० १ सू० ७ ) ।

प्रत्ययानुपश्यः—प्रत्ययं बौद्धमनुपश्यतीति प्रत्ययानुपश्यः । तमनुपश्यन् द्रष्टा तदात्मक इव प्रत्यवभासते । यथा निर्मले जले स्वयमसंक्रान्तोऽपि चन्द्रः सङ्क्रान्तप्रतिबिम्बतया सङ्क्रान्त इव भवति, एवमसङ्क्रान्ताऽपि चितिशक्तिः संक्रान्तप्रतिबिम्बा सती स्वयं सङ्क्रान्तेव बुद्ध्यात्मत्वमापन्ना बुद्धिमनुपततीति चितिशक्तिः = द्रष्टा प्रत्ययानुपश्य इत्युच्यते । ( द्र० यो० भा० त० वै० पा० २ सू० २० ) ।

**प्रत्याहारः**—इन्द्रियविषयासंप्रयोगकाले इन्द्रियाणां चित्तस्वरूपानुकारितेव या भवति सा इन्द्रियाणां प्रत्याहार इत्युच्यते। अतःचित्तनिरोधकाले चित्तवन्निरुद्धानीन्द्रियाणि स्वनिरोधाय नोपायान्तरमपेक्षन्ते। यथा मधुकरराजं मक्षिका उत्पतन्तमनूत्पतन्ति निविशमानमनुनिविशन्ते, तथेन्द्रियाणि चित्तनिरोधे निरुद्धानीत्येष प्रत्याहारः। ( द्र० यो० भा० तथा वा० पा० २ सू० ५४ )।

**प्रधानजयः**—सर्वप्रकृतिविकारवशित्वं प्रधानजयः। स च ग्रहणस्वरूपास्मिताऽन्वयार्थवत्त्वसंयमाज्जायमानेनेन्द्रियजयेन सिध्यति। ( द्र० यो० भा० त० वै० पा० ३ सू० ४८ )।

सर्वासां व्यक्तिभेदेन अनन्तानां भूतेन्द्रियप्रकृतीनां सत्तादिगुणानां तद्विकाराणां च सर्वेषां स्वेच्छयाऽनुविधानं प्रधानजय इति विज्ञानभिक्षुः। द्र० यो० वा० पा० ३ सू० ४८। )।

**प्रधाने निरतिशयं सौक्ष्यम्**—पार्थिवस्याणोर्गन्धतन्मात्रं सूक्ष्मो विषयः, आप्यस्य रसतन्मात्रम्, तैजसस्य रूपतन्मात्रम्, वायवीयस्य स्पर्शतन्मात्रम्, आकाशस्य शब्दतन्मात्रञ्चेति। तेषां तन्मात्राणामहङ्कारः सूक्ष्मो विषयः, अस्यापि लिङ्गमात्रम् ( बुद्धिः ) सूक्ष्मो विषयः, लिङ्गमात्रस्यापि अलिङ्गं प्रधानं सूक्ष्मो विषयः। न चालिङ्गात् प्रधानात् परं सूक्ष्ममस्ति। तस्मात् प्रधाने निरतिशयं सौक्ष्यमस्तीति। ( द्र० यो० भा० पा० १ सू० ४५ )।

**प्रपञ्चस्य नित्यानित्योभयरूपत्वम्**—कार्यकारणभेदेन प्रकृत्यादीनां सर्वेषां परिणामिनां प्रकारभेदेन नित्यानित्योभयरूपत्वम् इति सिद्धान्तः। ( द्र० यो० वा० पा० ३ सू० १३ )।

**प्रपञ्चस्य सदसद्रूपत्वम्**—प्रपञ्चस्य नित्यानित्योभयरूपत्वादेव सदसद्रूपत्वमित्यपि सिद्धान्तः। ( द्र० यो० वा० पा० ३ सू० १३ )।

**प्रमाख्यम् फलम्**—प्रमाख्यं फलं बुद्धेरेव धर्मः । प्रमायाः वृत्तिजन्यतया वृत्त्याख्यकारणसामानाधिकरण्येन बुद्धावेव प्रमारूपकार्यजननाभ्युपगमस्यौचित्यात् । एतदनुसारं चैतन्यमेव हि बुद्धिदर्पणप्रतिबिम्बितं बुद्धिवृत्त्याऽर्थाकारया तदाकारतामापद्यमानं फलं, तच्च चिच्छायाख्यं चित्प्रतिबिम्बं बुद्धेरेव धर्मं इति कश्चित् ।

तन्न, पौरुषेयशब्दस्य यथाश्रुतार्थत्यागापत्तेः, प्रतिबिम्बस्य तुच्छतयाऽर्थमानरूपत्वानुपपत्तेश्च । किञ्च परस्परप्रतिबिम्बस्य श्रुतिस्मृतिसिद्धतया चितेरेव वृत्तिप्रतिबिम्बोपहितायाः फलत्वं युक्तम्, ज्ञानशब्देनात्मन एव प्रतिपादनात् । अपि च बुद्धेरेव प्रमातृत्वे पुरुषो न सिध्येत्, अनावश्यकत्वादिति विज्ञानभिक्षुः । ( द्र० यो० वा० पा० १ सू० ७ ) ।

**प्रमाणम्**—अनधिगततत्त्वबोधः पौरुषेयो व्यवहारहेतुः प्रमा तत्करणं प्रमाणम् । ( द्र० त० वै० पा० १ सू० ७ ) ।

**प्रवृत्तिः**—कर्म क्रिया वा । तथा च क्रियाशालित्वात् चित्तं रजोगुणमुच्यते ।

**प्रशान्तवाहिता**—निरोधसंस्कारात् निरोधसंस्काराभ्यासपाटवापेक्षा प्रशान्तवाहिता चित्तस्य भवति । प्रशान्तवाहिता च व्युत्थानसंस्कारमलरहितनिरोधसंस्कारपरम्परामात्रवाहिता इति वाचस्पतिमिश्राः । ( द्र० यो० भा० त० वै० पा० ३ सू० १० ) ।

निरोधावस्थचित्तस्य निश्चलनिरोधधारया वहनं प्रशान्तवाहितेति विज्ञानभिक्षुः । द्रष्टव्यं तत्रत्यं वार्तिकम् ।

**प्रश्वासः**—कौष्ठ्यस्य वायोर्निःसारणं प्रश्वासः ।

**प्राकाम्यम्**—इच्छानभिघातः । नास्य योगिनो रूपं भूतस्वरूपैर्मूर्त्यादिभिरभिहन्यते । भूमौ उन्मज्जति निमज्जति च यथोदके इति । ( द्र० यो० भा० त० वै० पा० ३ सू० ४५ ) ।

**प्राणः**—आ नासिकाग्रात् आ च हृदयादवस्थितो वायुविशेषः प्राणः। स च जीवनस्य प्रयत्नविशेषस्य कार्यविधया लक्षकः। प्राणादिनैव लक्ष्यतेऽयं जीवतीति। यथा वह्निकार्येण धूमेन पर्वतादौ वह्निर्लक्ष्यते, तद्वत्। ( द्र० यो० भा० त० वै० पा० ३ सू० ३९ )।

विज्ञानभिक्षुराह—"समस्तेन्द्रियवृत्तिः प्राणादिलक्षणा जीवनम्" इति भाष्ये समस्तपदं सामान्यवाचकम्, इन्द्रियपदञ्च स्थूलसूक्ष्मोभयपरतया करणमात्रपरम्। प्राणपदं प्राणनादिवृत्तिपरं, लक्षणपदञ्च स्वरूपार्थकं न तु लक्ष्यतेऽनेनेति करणव्युत्पत्त्या लक्षणपरम्। तथा च करणसामान्यस्य प्राणनादिरूपा वृत्तिरेव जीवनम्। अतो यथैकैकस्य करणस्याध्यवसायाभिमानसङ्कल्पालोचनात्मिका पृथक् पृथक् वृत्तिर्भवति, तथैव करणसामान्यस्यापि प्राणनापाननसमाननोदानव्याननरूपा देहान्तर्गतदेशभेदात् पञ्चतयी सामान्या वृत्तिर्भवति। एतावता करणसामान्यमेव देशभेदात् प्राणापानसमानोदानव्यानसंज्ञाः लभते इति करणमेव प्राणादयो न तु शरीरोपगृहीतमारुतभेदा इति। लिङ्गशरीरस्योर्ध्वाधःसञ्चारादुत्पद्यमानेन वायुना सहाविवेकादेव तु तप्तायःपिण्डवत् प्राणेषु वायुव्यवहारः। तस्मात् करणसामान्यमेव मुखनासिकागतिराहृदयवृत्तिः प्राण इति। अधिकन्तु वार्तिकादवगन्तव्यम्। ( द्र० यो० वा० पा० ३ सू० ३९ )। अनयोः कतरः पक्षो युक्त इति तु सुधीभिरेवावधानीयम्।

तत्त्वसमाससूत्रेऽपि प्राणापानादयो वायुरूपा एवाभ्युपगताः। तथा च तत्त्वसमाससूत्रम्—"पञ्च वायवः" सूत्रम् ११। व्याख्यातञ्चैतत् तथैव सर्वोपकारिणीटीकाकृताऽपि।

**प्राणायामः**—शास्त्रोक्तरीत्या श्वासप्रश्वासयोः स्वाभाविकगतेः प्रतिषेधः प्राणायामः। प्राणायामे आसनसाहित्यं नितान्तमावश्यकम्। अत एव "तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः" इति योगसूत्रे "तस्मिन् सति" इत्युक्तम्। आसने सतीति तस्यार्थः।

तस्य मुख्यतस्त्रयो भेदाः—रेचकपूरककुम्भका इति । न च ते त्रयो मिलित्वैक एव प्राणायाम इति वाच्यम् केवलकुम्भकस्यापि प्राणायामत्ववचनात् । तदुक्तं वाशिष्ठसंहितायाम्—

रेचकं पूरकं त्यक्त्वा सुखं यद्वायुधारणम् ।
प्राणायामोऽयमित्युक्तः स वै केवलकुम्भकः ।। इति ।
(द्र० यो० वा० पा० २ सू० ४९) ।

प्राणायामस्यापरे भेदा विधयश्च योगचिन्तामण्यादिग्रन्थान्तरतोऽवसेयाः ।

—०—

**बन्धकोटिद्वयम्**—पूर्वा उत्तरा चेति बन्धस्य कोटिद्वयम्। तत्र यो मुक्तो जातस्तस्य पूर्वा बन्धकोटिरभूत् किन्तूत्तरा बन्धकोटिर्नास्ति। एवं ये प्रकृतिभावनासंस्कृतमनसस्ते देहपातानन्तरमेव प्रकृतिलयता-मापन्नास्तेषां पूर्वा बन्धकोटिरभूदेव किन्तूत्तराऽपि बन्धकोटिः संभाव्यत एव। ईश्वरस्य तु सदैव मुक्तत्वात् नास्ति पूर्वा बन्धकोटि-र्नापि चोत्तरा बन्धकोटिरिति। (द्र० यो० भा० त० वै० पा० १ सू० २४)।

अत्र भाष्यविवरणकारः—अनारब्धसंसारस्य प्रकृतिलीनस्योतरा बन्धकोटिः सम्भाव्यते। प्रवृत्तसंसारस्य चाप्रकृतिलीनस्य बद्धजनस्य साधिकारत्वात् पूर्वोत्तरबन्धकोटी स्तः। मुक्तस्य तु पूर्वा बन्धकोटि-र्मुक्तत्वोपपत्तेरेव जायते। बन्धपूर्विका हि मुक्तिरिति। (द्र० पा० यो० सू० भा० वि० पा० १ सू० २४)।

**बन्धनानि**—प्रकृतिलयानां प्राकृतो बन्धः, विदेहानां वैकारिको बन्धः, दिव्यादिव्यविषयभोगभाजां च दक्षिणाबन्ध इति। (द्र०यो० भा० त० वै० पा० १ सू० २४) तत्राष्टप्रकृतिष्वभिमानरूपः प्रथमः, शब्दादिविषयरागरूपो द्वितीयः, गृहस्थानां दानाध्ययनादिष्वभिष्व-ङ्गरूपस्तृतीयः। (द्र० पा० सू० वृ० पा० १ सू० २४)

**बीजम्**—अविद्यादिक्लेशसहितः कर्माशयो जात्यायुर्भोगानां बीजम्। (द्र० त० वै० पा० १ सू० २)।

**बुद्धिसंवित्**—सुषुम्नाख्यनाड्यां चित्तस्थानभूतायां चित्तं धारयतो योगिनश्चित्तसंविदुत्पद्यते, सैव बुद्धिसंवित्। (द्र० यो० भा० त० वै० पा० १ सू० ३६)।

**बुद्धिः परार्था**—बुद्धिः खलु क्लेशकर्मवासनादिभिर्विषयेन्द्रियादिभिश्च संहत्य पुरुषार्थमभिनिर्वर्तयन्ती परार्था भवति। अत्रानुमानप्रयोगः—बुद्धिः परार्था संहत्यकारित्वात् शयनासनाभ्यङ्गवत् इति। पुरुषस्तु

स्वार्थः। यतः सर्वं पुरुषाय कल्पते, पुरुषस्तु न कस्मैचिदिति। ( द्र० यो० भा० त० वै० पा० २ सू० २० )।

**बुद्धेः प्रतिसंवेदी पुरुषः**—यं विषयं बुद्धिः संवेत्ति तं पुरुषोऽपि तथैव संवेत्तीति बुद्धेः प्रतिसंवेदी पुरुष इत्युच्यते। अयमाशयः—न हि बोधः पुरुषगतो जन्यते. अपि तु चैतन्यमेव अर्थाकारया बुद्धिवृत्त्या तदाकारतामापद्यमानं बोधात्मकं फलं भवति। तच्च तथाभूतं बुद्धेरविशिष्टं बुद्धिसमानाकारं भवतीति इदमेव पुरुषस्य बुद्धिप्रतिसंवेदित्वम् इति वाचस्पतिमिश्राः। ( द्र० यो० भा० त० वै० पा० १ सू० ७ )।

विज्ञानभिक्षुस्त्वाह—यद्यपि विषयाकारतैव विषयग्रहणं चित्तस्थले दृष्टं, पुरुषस्तु कूटस्थो न विषयाकारतां भजते, अतः कथं पुरुषश्चित्तवृत्तिसाक्षी स्यात्? कथं वाऽविशिष्टः पौरुषेयो बोध? इत्याशङ्का जागर्ति। तथापि संवेदिन्या बुद्धेः प्रतिसंवेदि = तत्समानाकारः पुरुषः इति चितेः स्वयमाकाराभावेऽपि प्रतिबिम्बवशाद् वृत्त्याकारापत्त्या वृत्तिबोध इति पुरुषो बुद्धेः प्रतिसंवेदो कथ्यते। ( द्र० यो० वा० पा० १ सू० ७ )।

**ब्रह्मणि सर्वजीवानामविभागलक्षणाभेदो न त्वखण्डत्वम्**—न्यायानुगृहीतैः बलवद्भिरग्निविस्फुलिङ्गादिसांशदृष्टान्तैः विरोधात् आकाशसूर्यादिदृष्टान्ता जीवब्रह्मणोरखण्डतापरा न भवन्ति, किन्तु ब्रह्मणि सर्वजीवानामविभागलक्षणाभेदस्य सर्वकालस्थायितया पारमार्थिकत्वेऽपि यद् किञ्चिदवच्छेदन फेनबुद्बुदादिवत् अतिभङ्गुरस्य विभागलक्षणभेदस्यापारमार्थिकस्योपाधिकत्वमात्रं प्रतिपादयन्तीति ब्रह्मणि जीवानां नाखण्डत्वं किन्त्वविभागलक्षणाभेद एवेति विज्ञानभिक्षुः। ( द्र० यो० वा० पा० १ सू० २४ )।

**ब्रह्मनाडी**—उदरोरसोर्मध्ये यत्पद्ममधोमुखं तिष्ठति अष्टदलम्, रेचकप्राणायामेन तदूर्ध्वमुखं कृत्वा तत्र चित्तं धारयन्ति योगिनः। तन्मध्ये

सूर्यमण्डलं जागारितस्थानमकारः, तस्योपरि चन्द्रमण्डलमुकारः स्वप्नस्थानम्, तस्योपरि वह्निमण्डलं मकारः सुषुप्तिस्थानम्, तस्योपरि परव्योमात्मकं ब्रह्मनादं तुरीयस्थानमर्धमात्रमुदाहरन्ति ब्रह्मवादिनः। तत्र कर्णिकायामूर्ध्वमुखी सूर्यादिमण्डलमध्यगा ब्रह्मनाडी। ततोऽप्यूर्ध्वं प्रवृत्ता सुषुम्ना नाडी भवति। ( द्र० यो० भा० त० वै० पा० १ सू० ३६ )।

ब्रह्मनादम्—नादात्मकं ब्रह्मैव ब्रह्मनादम्, तदेवार्धमात्रमुदाहरन्ति ब्रह्मवादिनः। अत्र ब्रह्मनाडीशब्दकोशोऽवधानीयः। ( द्र० यो० वा० पा० १ सू० ३६ )।

—०—

**भवप्रत्ययः**—असम्प्रज्ञातसमाधेरेको भेदः। भवन्ति जायन्तेऽस्यां जन्तव इति भवोऽविद्या। सा च भूतेन्द्रियेषु विकारेषु प्रकृतिषु वाऽव्यक्तमहदहङ्कारपञ्चतन्मात्रेषु अनात्मसु आत्मख्यातिस्तौष्टिकानां वैराग्यसम्पन्नानाम्। एवंविधो भवः (अविद्या) प्रत्ययः कारणं यस्य निरोधसमाधेः (असम्प्रज्ञातस्य) स भवप्रत्ययः। स च भवप्रत्ययोऽसम्प्रज्ञातसमाधिर्विदेहानां प्रकृतिलयानाञ्च भवतीति। (द्र० यो० भा० त० वै० पा० १ सू० १९)।

**भवसङ्क्रमः**—देहाद् देहान्तरसञ्चाराख्यः श्लिष्टपर्वा अव्यवधानेन प्रवर्तमानः संसारो भवसङ्क्रम इत्युच्यते। यस्याविच्छेदात् जनित्वा म्रियते, मृत्वा च जायते जन्तुरिति। (द्र० यो० वा० पा० १ सू० १६)।

**भुवनज्ञानम्**—सूर्यद्वारे = सुषुम्नायां नाड्याम् संयमेन भुवनज्ञानं जायते योगिनः। बुद्धिसत्त्वं हि स्वभावत एव विश्वप्रकाशनसमर्थं तमोमलावृतं यत्रैव रजसोद्घाट्यते तदेव प्रकाशयति। किन्तु सूर्यद्वारसंयमोद्घाटितं बुद्धिसत्त्वं भुवनमेव समस्तं प्रकाशयतीति। संक्षेपेण सप्तलोकात्मकं भुवनम्। तत्रावीचेः प्रभृति मेरुपृष्ठं यावत् भूलोकः। मेरुपृष्ठादारभ्याध्रुवाद् ग्रहनक्षत्रताराविचित्रोऽन्तरिक्षलोकः (भुवर्लोकः)। ततः परः स्वर्लोकः पञ्चविधः। पञ्चविधं स्वर्लोकमेकं मत्वा लोकत्रयीति प्रसिद्धिः। पञ्चविधं स्वर्लोकं पञ्च मत्वा पूर्वलोकद्वययोगेन सप्तलोका इति प्रसिद्धिः। तेषु पञ्चविधस्वर्लोकेषु प्रथमो माहेन्द्रो लोकः सप्तलोकेषु तृतीयो लोकः। चतुर्थः प्राजापत्यो महर्लोकः। ब्राह्मस्त्रिविधः। तत्र जनलोकः पञ्चमः। तपोलोकः षष्ठः। सत्यलोकः सप्तमः। इत्येवं सप्तलोकात्मकं भुवनम्। त एते सप्तलोका अवान्तरं चतुर्दशधा भिन्नाः सर्वे एवादिपुरुषस्य ब्रह्मणो लोकाः, ब्रह्मणो हिरण्यगर्भस्य लिङ्गदेहेन सर्वलोकव्यापनात्। एषु लोकेषु निवासिनो भिन्ना भिन्नाः सन्ति। विदेहप्रकृतिलयास्तु मोक्ष-

पदे वर्तन्त इति सत्यपि साधिकारत्वे न ते लोकमध्ये न्यस्ताः सन्ति। ये हि बुद्धिवृत्तिमग्तः सन्ति त एव दर्शितविषया लोकयात्रां वहन्तो लोकेषु वर्तन्ते। तदेतदासत्यलोकमाचावीचेर्योगिना साक्षात्करणीयं सूर्यद्वारे सुषुम्नायां नाड्यां संयमात्। यदि नैतावतापि तत्साक्षात्कारो भवति तदा सुषुम्नाया अन्यत्रापि योगोपाध्यायोपदिष्टेषु तावत् संयमः करणीयो यावदिदं सर्वं जगद् दृष्टं भवेदिति। (द्र० यो० भा० त० वै० पा० ३ सू० २६)।

भूतजयः—पञ्चानां पृथिव्यादीनां भूतानां ये पञ्चावस्थाविशेषा धर्माः स्थूलत्वादयस्तत्र कृतसंयमस्य भूतजयो भवति, भूतानि अस्य वश्यानि भवन्ति। तत्र भूतानां परिदृश्यमानं विशिष्टाकारवद्रूपं स्थूलम्। स्वरूपञ्चैषां यथाक्रमं कार्यं गन्ध-स्नेहोष्णता-प्रेरणावकाशदानलक्षणम्। सूक्ष्मञ्च यथाक्रमं भूतानां कारणभेदेन व्यवस्थितानि गन्धादिपञ्चतन्मात्राणि। अन्वयिनो गुणाः प्रकाशप्रवृत्तिस्थितिरूपतया सर्वत्रैवान्वयित्वेन समुपलभ्यमानाः। अर्थवत्त्वं तेषु एव गुणेषु भोगापवर्गसम्पादनरूपा शक्तिः। तदेवं भूतेषु पञ्चसु उक्तधर्मलक्षणावस्थाभिन्नेषु प्रत्यवस्थं संयमं कुर्वन् योगी भूतजयी भवतीति। (द्र० भो० वृ० पा० ३ सू० ४४)।

भेदोऽन्योन्याभावरूपोऽभेदश्चाविभागरूपः—जीवब्रह्मणोः परस्परं भेदोऽपि वर्ततेऽन्योन्याभावलक्षणः। अभेदोऽपि वर्तते। किन्तु अयमभेदो नाखण्डत्वलक्षणः अपितु अविभागलक्षण एवेति विज्ञानभिक्षुः। (द्र० यो० वा० पा० १ सू० २६)।

भोगः—इष्टानिष्टगुणस्वरूपावधारणमविभागापन्नं भोगः। इष्टानिष्टे सुखदुःखे, ते च त्रिगुणात्मिकाया बुद्धेः स्वरूपे, तयोरविभागापन्नतयाऽवधारणं भोग इत्यर्थः। बुद्धिगततयाऽवधारणे तु न भोगः। भोगश्च यद्यपि सुखाद्यात्मकशब्दाद्याकारा वृत्तिश्चित्तस्य धर्मस्तथापि चित्तचैतन्योरभेदसमारोपात् वृत्तिसारूप्यात् पुरुषस्येत्युच्यते। (द्र० यो० भा० त० वै० पा० १ सू० ४)।

भोगः प्रत्ययाविशेषः—अयमर्थो भोगपदार्थविवेचनेनैव गतार्थः। तथाप्ययमर्थः—शान्तघोरमूढरूपाया बुद्धेश्चैतन्यप्रतिबिम्बोद्ग्राहेण चैतन्यस्य शान्ताद्याकाराध्यारोपश्चन्द्रमस इव स्वच्छसलिलप्रतिबिम्बितस्य तत्कम्पात् कम्पनारोपः, भोगः। ( द्र० यो० भा० त० वै० पा० ३ सू० ३५ )।

विज्ञानभिक्षुस्तु-प्रत्यययोरविशेषः प्रत्ययाविशेष इति विगृह्य प्रत्यययोर्विविच्याग्रहणं भोगः इत्याह। तत्र बुद्धेः प्रत्ययः सुखादिमतो विषयाद्याकारश्चित्तवृत्तिः, पुरुषस्य प्रत्ययो बुद्धिवृत्तिप्रतिबिम्बावच्छिन्नचैतन्यांशः सुखाद्यात्मकशब्दाद्यनुभवनामा। ( द्र० यो० वा० पा० ३ सू० ३५ )।

भोगापवर्गौ मुख्यपुरुषार्थौ—यद्यपि धर्मार्थकाममोक्षाश्चत्वारः पुरुषार्थाः शास्त्रेषु प्रसिद्धास्तथापि धर्मार्थकामानां भोगेऽन्तर्भूतत्वात् भोगापवर्गों एव मुख्यौ पुरुषार्थो।

———

**मधुप्रतीका**—संप्रज्ञातस्य वितर्कानुगतादिचतुर्भेदेषु यो द्वितीयो भेदो विचारानुगत इति स एव मधुप्रतीकानाम्नी भूमिरिति। ( द्र० पा० सू० वृ० पा० १ सू० २ )।

तृतीययोगिनः प्रज्ञाज्योतिषो मधुप्रतीका भूमिरिति सर्वदर्शनसंग्रहकारः। तस्यामेव भूमौ मनोजवित्वादिसिद्धयः। यथा मधुन एकदेशोऽपि स्वदते तथा प्रत्येकमेव ताः सिद्धयः स्वदन्त इति मधुप्रतीकाः उच्यन्ते।

**मधुमती**—वितर्कानुगतस्य सम्प्रज्ञातयोगस्यैव अपरा संज्ञा मधुमतीति। तत्र ऋतम्भरा प्रज्ञैव मधु, मोदकारणत्वात् तद्वती मधुमती। ( द्र० यो० वा० पा० ३ सू० ५४ तथा पा० सू० वृ० पा० १ सू० २ )।

अत्र विवरणकारः—अत्र मधुमतीं भूमिं साक्षात्कुर्वतो ब्राह्मणस्य स्थानिनो देवाः सत्त्वविशुद्धिमनुपश्यन्तः स्थानैरुपनिमन्त्रयन्ते "भो इहास्यताम्, इह रम्यताम्, कमनीयोऽयं भोगः" इत्यादि। एवमभिधीयमानः सङ्गदोषान् भावयेत्। सङ्गमकृत्वा स्मयमपि न कुर्यात् "एवमहं देवानामपि प्रार्थनीय" इति।

सर्वदर्शनसंग्रहे चोक्तम्—अभ्यासवैराग्यादिवशात् अपास्तरजस्तमोलेशसुखप्रकाशमयतत्त्वभावनया ऋतंभरप्रज्ञाख्या समाधिसिद्धिर्जायते इति ऋतंभरप्रज्ञयोग्येव द्वितीयो मधुभूमिकसंज्ञक उच्यते, तस्यैव भूमिर्मधुमती नाम्नी प्रसिद्धेति।

**मध्यतीव्रः**—यस्योपायप्रत्ययस्य योगिनः श्रद्धावीर्यस्मृतिसमाधिप्रज्ञारूपा उपाया अधिमात्रा भवन्ति तथा संवेगो ( वैराग्यञ्च ) मध्यतीव्रो भवति, तस्यासन्नतरः समाधिलाभस्तत्फलं च भवत इति। ( द्र० यो० भा० पा० १ सू० २२ )।

**मध्यसंवेगः**—यस्योपायप्रत्ययस्य योगिनो वैराग्यं न मृदु भवति, नापि तीव्रं भवति, स मध्यसंवेग इत्युच्यते। ( द्र० यो० भा० पा० १ सू० २१ )।

**मध्योपायः**—यस्य योगिनः श्रद्धाद्युपाया न मृदवो नाधिमात्रा भवन्ति, स योगो मध्योपाय इत्युच्यते ( द्र० यो० मा० पा० १ सू० २१ )।

**मनोजवित्वम्**—कायस्यानुत्तमो गतिलाभो मनोजवित्वम्। तच्च पञ्चेन्द्रियजयात् सिध्यति। ( द्र० यो० मा० त० वै० पा० ३ सू० ४८ )।

**मनोवहनाडी**—उदरोरसोर्मध्ये यत् पद्मं तिष्ठत्यधोमुखमष्टदलं, तस्मिन् मध्ये सूर्यमण्डलमकारो जागरितस्थानम्, तस्योपरि चन्द्र मण्डलमुकारः स्वप्नस्थानम्, तस्योपरि वह्निमण्डलं मकारः सुषुप्तिस्थानम्, तदुपरि परं ब्रह्म व्योमात्मकं नादस्तुरीयस्थानमस्ति, यमर्धमात्रमुदाहरन्ति योगिनः, तत्कर्णिकायां विष्वग्व्यापिसहस्रशाखाया मनोवहनाड्या मूलं तिष्ठति। तस्याश्चालावुलतिकाया इव शाखाभूता सुषुम्नादिनाड्यस्ति। सैव मनोवहा नाडीचित्तस्थानम्। ( द्र० यो० वा० पा० १ सू० ३६ )।

**मनो विभु**—"बुद्धिसत्त्वं हि भास्वरमाकाशकल्पम्" इति वदता भाष्यकारेण मनसस्तेजोवत् स्वपरप्रकाशकत्वमाकाशवद् विभुत्वञ्च सिद्धान्तितम्। ( द्र० यो० वा० पा० १ सू० ३६ )।

**महाप्रलयः**—यत्र सत्यलोकसहितं समस्तं जगदस्तमेति, ब्रह्मणोऽपि निधनं जायते, स महाप्रलयः। ( द्र० यो० मा० त० वै० पा० १ सू० २५ )।

**मुदिता**—पुण्यशीलेषु प्राणिषु कृता मुदिता ( हर्षम् ) स्वभावनयाऽसूयाकालुष्यं चेतसो निवर्तयति।

**मुद्रादशकम्**—महामुद्रा महाबन्धो महावेधश्च खेचरी।
उड्यानं मूलबन्धश्च बन्धो जालन्धराभिधः॥
करणी विपरीताख्या वज्रोली शक्तिचालनम्।
इदं हि मुद्रादशकं जरामरणनाशनम्॥
( द्र० ह० यो० प्र० उप० ३ श्लो० ६-७ )।

**मूढम्**—तमः समुद्रेकान्निद्रावृत्तिमच्चित्तं मूढमुच्यते।

**मूलपृथक्त्वाभावः**—जगन्मूलस्य प्रधानस्य पृथक्त्वं भेदो नास्ति। कार्याणि कामं परस्परं भिद्यन्ते, सकलकार्यमूलभूतं प्रधानन्तु अभिन्नमेवास्ति। अतएव योगसूत्रम् "कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात्" इति पा० २ सू० २२।

तेन देशलक्षणभेदो मूर्तिव्यवधिजातिभेदश्च वस्तूनामन्यत्वे हेतुः। अतः परमाणूनां परस्परभेदसाधनाय वैशेषिकैरङ्गीकृतोऽन्त्यो विशेषपदार्थो नाङ्गीकरणीयः, तेष्वपि देशादिभेदैरेवान्यत्वस्यावधारणात्। यत्रापि योगिनो मुक्तांस्तुल्यजातिदेशकालान् व्यवधिरहितान् परस्परतो भेदेन प्रत्येकं तत्त्वेन च प्रतिपद्यन्ते तत्रापि भेदप्रतिपत्तये न विशेषास्तेषु मुक्तात्मसु स्वीकरणीयाः, तेषां मुक्तौ ये क्षणभेदास्तैरेव योगिभिर्मुक्तात्मनां भेदावगमात्। (द्र० यो० भा० त० वै० पा० ३ सू० ५३)।

विज्ञानभिक्षुस्तु—मूलेषु नित्यद्रव्येषु परमाण्वादिषु पृथक्त्वम् = विशेषपदार्थो नास्तीत्यर्थमाह।

**मृदुसंवेगः**—मृद्वाद्युपायवतो योगिनः संवेगः = वैराग्यं यदा मृदु भवति, तदा स योगी मृदुसंवेग उच्यते।

**मृदूपायः**—यस्यासम्प्रज्ञातयोगिनः श्रद्धाद्युपायाः मृदवः सन्ति, न मध्या नाधिमात्राः, स मृदूपाय इत्युच्यते।

**मैत्री**—सुखितेषु जनेषु मैत्रीं = सौहार्दम् भावयतश्चित्तं प्रसादमधिगच्छति, ततः स्थितिञ्च लभते।

**मोक्षत्रैविध्यम्**—"आद्यस्तु मोक्षो ज्ञानेन, द्वितीयो रागसंक्षयात्।
कृच्छ्रक्षयात्तृतीयस्तु, व्याख्यातं मोक्षलक्षणम्॥

इति वचनात्। (द्र० यो० भा० पा० १ सू० २४)

मोक्षः—"मुक्तिर्हित्वाऽन्यथाभावं स्वरूपेण व्यवस्थितिः" इति वचनानुसारम् आत्यन्तिकं स्वरूपावस्थानमेव मोक्षः। ( द्र० यो० भा० पा० १ सू० १ )।

यमाः—अहिंसा-सत्यास्तेय-ब्रह्मचर्यापरिग्रहा यमाः। तत्र अहिंसा सर्वथा सर्वदा सर्वभूतानामनभिद्रोहः।

सत्यम्-यथार्थे वाङ्मनसे। यथादृष्टं यथानुमितं यथा श्रुतं तथा वाङ्मनश्चेति। सत्या वाक् सर्वभूतोपकारार्थं प्रवृत्ता न भूतोपघाताय। यदि चाभिधीयमाना परोपघातपरैव स्यान्न तत् सत्यं भवेत्. पापमेव भवेत्। तस्मात् परीक्ष्य सर्वभूतहितं सत्यं ब्रूयात्।

अस्तेयम्—स्तेयमशास्त्रपूर्वकं द्रव्याणां परतः स्वीकरणम्। तत्प्रतिषेधः पुनरस्पृहारूपमस्तेयम्।

ब्रह्मचर्यम्—गुह्येन्द्रियस्योपस्थस्य संयमः।

अपरिग्रहः—विषयाणामर्जनरक्षणक्षयहिंसादोषदर्शनादस्वीकरणम्। ( द्र० यो० भा० पा० २ सू० ३० )।

योगशास्त्रस्य चतुर्व्यूहत्वम्—यथा चिकित्साशास्त्रं चतुर्व्यूहम् रोगो, रोगहेतुरारोग्यं भैषज्यमिति। एवमिदमपि शास्त्रं चतुर्व्यूहमेव। तद्यथा-संसारः, संसारहेतुः, मोक्षो मोक्षोपाय इति। तत्र दुःखबहुलः संसारो हेयः। प्रधानपुरुषयोः संयोगो हेयहेतुः। संयोगस्यात्यन्तिकी निवृत्तिर्हानम्। हानोपायः सम्यग्दर्शनम् इति। ( द्र० यो० भा० पा० २ सू० १५ )।

योगः—चित्तवृत्तिनिरोधरूपो द्विविधोऽपि योगः, संप्रज्ञातोऽसंप्रज्ञातश्चेति। यस्मिन्नवस्थाविशेषे चित्तस्य प्रमाणादिवृत्तयो निरुध्यन्ते, सोऽवस्थाविशेषो योगः। स चावस्थाविशेषः सम्प्रज्ञातोऽसंप्रज्ञातश्चोभावपि। योगलक्षणे सर्वशब्दाग्रहणात् सम्प्रज्ञाते सात्त्विकचित्तवृत्तेरनिरोधेऽपि न लक्षणाव्याप्तिस्तत्र। ( द्र० यो० भा० त० वै० पा० १ सू० २ )।

मन्त्रयोग-लययोग-राजयोग-हठयोगेषु च योगशब्दस्य प्रयोगस्तु तेषां साक्षात्परम्परयोक्तयोगसाधनत्वाद् भवति। ( द्र० यो० चि० अ० १ पृ० ११ )।

क्लेशकर्मविघटकत्वे सति चित्तवृत्तिनिरोधत्वं योगत्वमिति योगमञ्जरीकारः। स्वरूपावस्थितिहेतुत्वे सति चित्तवृत्तिनिरोधो योगः इति विज्ञानभिक्षुः। (द्र० यो० वा० पा० १ सू० ३ तथा यो० सा० सं०)।

योगप्रदीपः—सम्प्रज्ञातः। विवेकजं ज्ञानं परिपूर्णं सूर्यतुल्यम्। अतो यथा सूर्यस्यांशः प्रदीपस्तथा संप्रज्ञातोऽपि विवेकजज्ञानस्य सूर्यस्यांश इति योगप्रदीपः स उच्यते। (द्र० यो० भा० त० वै० पा० ३ सू० ५४)।

योगाङ्गानि—यम नियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टौ योगाङ्गानि यमादयश्चैकैकशः पृथक्-पृथक् निरूपिता इति तत एव द्रष्टव्याः।

योगानुशासनम्—अनुशिष्यतेऽनेनेति व्युत्पत्त्याऽनुशासनं शास्त्रम्। तथा च अथ योगानुशासनम्" इति सूत्रे योगानुशासनम् = योगप्रतिपादकं शास्त्रमित्यर्थः। (द्र० त० वै० पा० १ सू० १)।

योगारूढः—आरूढयोगः, आरूढयोगवृक्षः, योगारूढश्चेत्यनर्थान्तरम्। अतो द्रष्टव्यः आरूढयोगशब्दविचारः।

रागः—सुखाभिज्ञस्य सुखानुस्मृतिपूर्वः सुखे तत्साधने वा यो गर्धः, तृष्णा, लोभः स रागः तथा च सूत्रम्-सुखानुशयी रागः" इति। (द्र० यो० भा० पा० २ सू० ७)।

राजयोगः—निर्बीजसमाधिरेव राजयोगः। (द्र० यो० चि० अ० १ पृ० ११)। राजयोगः, समाधिः, उन्मनी, मनोन्मनी, अमरत्वं, लयः, तत्त्वं, शून्याशून्यं, परंपदम्, अमनस्कम्, अद्वैतम्, निरालम्बं, निरञ्जनम्, जीवन्मुक्तिः, सहजा, तुर्या इति पर्यायाः। (द्र० ह० यो० प्र० उप० ४ श्लो० ३-४)।

रेचकः—यत्र कोष्ठ्यो वायुर्विरेच्य बहिर्धार्यते, स रेचकः प्राणायामः। (द्र० त० वै० पा० २ सू० ४९)।

———

लक्षणपरिणामः—लक्षणानि त्रीणि अनागतलक्षणं, वर्तमानलक्षणमतीतलक्षणञ्च। तत्र मृद्धर्मो घटादिर्यदा अनागतलक्षणं हित्वा वर्तमानलक्षणं प्राप्नोति, यदा वा वर्तमानलक्षणं हित्वाऽतीतलक्षणं प्राप्नोति तदायं लक्षणपरिणाम इत्युच्यते। (द्र० यो० भा० पा० ३ सू० १३)।

लययोगः—संप्रज्ञातयोग एव लययोगः। (द्र० यो० चि० अ० १ पृ० ११)।

—०—

**वशीकारसंज्ञा**—स्त्रियोऽन्नपानमैश्वर्यमिति दृष्टविषये वितृष्णस्य स्वर्गवैदेह्यप्रकृतिलयत्वप्राप्तौ आनुश्रविकविषये वितृष्णस्य दिव्यादिव्यविषयसंप्रयोगेऽपि विषयदोषदर्शिनश्चित्तस्य प्रसंख्यानबलादनाभोगात्मिका हेयोपादेयशून्या वशीकारसंज्ञा वैराग्यम् इति योगभाष्यम् । ( द्र० यो० भा० पा० १ सू० १५ ) ।

अत्र उपर्युक्ता वशीकारसंज्ञा या वितृष्णा सैवापरवैराग्यमिति विज्ञानभिक्षुविवेचनम् ।

तेषु विषयेषु विगतगर्धस्य या वशीकारसंज्ञा अर्थात् "ममैते वश्याः नाहमेतेषां वश्यः" इति योऽयं विमर्शः तद्वैराग्यमिति भोजदेवः । वशीकर्तुं शक्यन्ते सर्वे गौणाः पदार्था, वशीकर्तव्यत्वेन संज्ञायन्ते, एवं वशीकृतानि च तस्यामवस्थायामिन्द्रियाणि संज्ञायन्ते, वशीकरणं वा संज्ञायतेऽस्यामवस्थायामिति साऽवस्था वशीकारसंज्ञा वैराग्यमिति विवरणकाराः । ( द्र० पा० यो० सू० भा० वि० पा० १ सू० १५ ) ।

**विकरणभावः**—विदेहानां स्थूलदेहसम्पर्करहितानामिन्द्रियाणामभिप्रेतदेशापेक्षोऽभिप्रेतकालापेक्षोऽभिप्रेतविषयपेक्षश्च यो वृत्तिलाभः स विकरणभावः । अर्थात् अपेक्षितदेशकालविषयानुसारं बाह्याभ्यन्तरकरणानि विकीर्णानि = व्यापीनि भूत्वा वृत्तिलाभं कुर्वन्तीति एवंविधविकरणभावोपपन्ना योगिन एव स्थाने स्थाने विदेहा इत्युक्ताः । ( द्र० यो० वा० पा० ३ सू० ४८ ) ।

**विकल्पः**- शब्दज्ञानमाहात्म्यनिबन्धनो वस्तुशून्यत्वेऽपि जायमानो यः प्रत्ययविशेषः स विकल्पो वृत्तिविशेषः । स न प्रमाणान्तर्गतो वस्तुशून्यत्वात्, न वा विपर्ययान्तर्गतो व्यवहाराविसंवादात् । यथा चैतन्यं पुरुषस्य धर्म इति । अत्र यद्यपि चैतन्यं पुरुषस्य स्वरूपमेव तथापि भेदेन षष्ठीव्यपदेशो विकल्पात् इति । ( द्र० यो० भा० त० वै० पा० १ सू० ९ ) ।

**विक्षिप्तम्**—क्षिप्ताद् विशिष्टं विक्षिप्तम्। तत्र क्षिप्तं सदैव रजसा तेषु तेषु विषयेषु क्षिप्यमाणमत्यन्तमस्थिरमिति पूर्वमुक्तम्। ततो विक्षिप्तेऽयं विशेषो यत् अस्थेमबहुलस्य चित्तस्य कादाचित्कः स्थेमा भवति विक्षिप्ते। ( द्र० त० वै० पा० १ सू० १ )

**विचारः**—सूक्ष्मभूत–पञ्चतन्मात्र-लिङ्गालिङ्गस्वरूपसाक्षात्कारवती या प्रज्ञा सैव विचारः। तदनुगतो द्वितीयो विचारानुगतसम्प्रज्ञातो भवति। ( द्र० यो० भा० त० वै० पा० १ सू० १७ )।

**वितर्कः**—पाञ्चभौतिकस्थूलचतुर्भुजादिस्वरूपसाक्षात्कारवती प्रज्ञा वितर्कः। तदनुगतः प्रथमो वितर्कानुगतः सम्प्रज्ञातो भवति। ( द्र० यो० भा० त० वै० पा० १ सू० १७ )।

**वितर्काः**—कृतकारितानुमोदिता हिंसादयो वितर्काः। ते च लोभात् क्रोधाद् मोहाद् वा भवन्ति। ( द्र० यो० भा० पा० २ सू० ३४ )।

**विदेहाः**—भूतेन्द्रियाणामन्यतमम् आत्मत्वेन प्रतिपन्नाः तदुपासनया तद्वासनावासितान्तःकरणाः पिण्ड—( देह ) पातानन्तरम् इन्द्रियेषु भूतेषु वा लीनाः संस्कारमात्रावशेषमनसः षाट्कौशिकशरीररहिता विदेहाः। ते हि स्वसंस्कारमात्रोपयोगेन चित्ते कैवल्यपदमिवानुभवन्तो भवन्ति। विदेहानां चित्तस्य कैवल्येन सारूप्यमवृत्तिकत्वम्, कैवल्येन वैरूप्यञ्च साधिकारसंस्कारशेषत्वरूपमस्ति। ( द्र० यो० भा० त० वै० पा० १ सू० १९ )।

**विधारणम्**—रेचितस्य प्राणस्य कौष्ठ्यस्य वायोर्यदायामो = बहिरेव स्थापनम् न तु सहसा प्रवेशनम्, तदेव विधारणम् ( द्र० त० वै० पा० १ सू० ३४ )। विधारणम् = कुम्भकमिति विज्ञानभिक्षुः।

**विपर्ययः**—मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ( तद्रूपाप्रतिष्ठम् ), अविद्या पञ्चपर्वा। तथा च योगसूत्रम्—"विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्" इति। ( पा० १ सू० ८ )

**विपाकः** - जातिः ( जन्म ), आयुः, भोगश्चेति त्रयः कर्मणां विपाक इत्युच्यन्ते। तथा च योगसूत्रम्—"सति मूले तद्विपाको जात्यायुर्भोगाः" पा० २ सू० १३ )।

**विभज्यवचनीयत्वम्**—यदि कश्चित् प्रश्नं कुर्यात् "किं सर्वो मृत्वा जनिष्यते ? इति। तदास्योत्तरं विभज्यैव वचनीयम्—प्रत्युदितविवेकख्यातिः क्षीणक्लेशो न जनिष्यते तदितरस्तु जनिष्यत इति। एवं मनुष्यजातिः श्रेयसी न वेति परिपृष्टे विभज्यवचनीयमुत्तरम्—पश्वपेक्षया श्रेयसी देवाद्यपेक्षया नेति। ( द्र० यो० भा० पा० ४ सू० ३३ )।

**विरामप्रत्ययः**—वृत्तीनामभावो विरामस्तस्य प्रत्ययः = कारणम् = परवैराग्यम्, तदेव विरामप्रत्यय इति वाचस्पतिमिश्राः। (द्र० यो० भा० त० वै० पा० १ सू० १८ )।

मणिप्रभा-योगमञ्जरीकारावपि मिश्रानेवानुसरतः।

विज्ञानभिक्षुस्तु—वृत्त्याऽपि विरम्यतामिति प्रत्ययो विरामप्रत्ययः = परं वैराग्यम्। अर्थात् ज्ञानेऽप्यलंबुद्धिर्ज्ञानमपि शाम्यतु इत्येवंरूपेति व्याचष्टे।

**विवेकख्यातिः**—चितिशक्तिरपरिणामिनी अतएवा प्रतिसङ्क्रमा, सुखदुःखमोहात्मकत्वाभावेन शुद्धाचानन्ता चास्ति। एतद्विपरीता परिणामिनी सुखदुःखमोहात्मकत्वेनाशुद्धा चास्ति सत्त्वगुणात्मिका विवेकख्यातिरतः सापि निरोद्धव्या निर्बीजसमाधिकामैः। ( द्र० यो० भा० त० वै० पा० १ सू० २ )।

**विवेकजं ज्ञानम्**—संसारसागरात्तारकं सर्वविषयकमतीतानागतवर्तमानविषयकतया सर्वथाविषयकं युगपत् सर्वविषकतयाऽक्रमञ्चेत्यत एव परिपूर्णं विवेकजं ज्ञानं, नास्य क्वचित् किञ्चित् कदाचिदगोचर इति। ( द्र० यो० भा० त० वै० पा० ३ सू० ५४ )।

**विवेकनिम्नं चित्तम्**—विवेकमार्गसञ्चारि, विवेकालम्बनं, विवेकनिष्ठं वा चित्तं विवेकनिम्नमित्युच्यते। (द्र० यो० वा० पा० ४ सू० २६)।

**विवेकिनः सर्वं दुःखात्मकम्**—यत्रापि वर्तमाने सुखं तत्रापि परिणामे दुःखं भवति। यथा पुत्रकलत्रादिजन्यसुखे रागो जायते, रागाच्च सुखं मे स्थिरं भवतु, मा नश्यतु "इत्यादिसंकल्पाद्यात्मको मानसः कर्माशयो धर्माधर्मादिरूपो भवति, तस्माच्च पुनर्जन्मादिदुःखमिति परिणामदुःखता। तापदुःखञ्च वर्तमानेऽनुभूयमानं सर्वजनप्रसिद्धमेव। तथापि इदं दुःखं परिणामेऽपि दुःखकरं भवति। तथाहि दुःखमनुभवन् सुखसाधनानि प्रार्थयमानः कायेन वाचा मनसा च परिचेष्टमानः सन् परमनुगृह्णाति अपहन्ति चेति परानुग्रहपीडाभ्यां धर्माधर्मौ उपचिनोति, ततश्च तदनुसारं जन्म गृह्णातीति तापदुःखं परिणामेऽपि दुःखम्। संस्कारस्य दुःखता यथा—अतीतः सुखानुभवोऽपि हि सुखसंस्कारमाधत्ते, स च सुखस्मरणमादधाति, तच्च रागं, रागश्च मनःकायवचनचेष्टां, सा च पुण्यापुण्ये, ततो जन्मादीति संस्कारदुःखता। एवमिदमनादिदुःखस्रोतो योगिनमेव प्रतिकूलात्मकत्वात् उद्वेजयति, नान्यम्। अक्षिपात्रकल्पो हि विद्वान्। यथोर्णातन्तुर्मृदुरपि अक्षिपात्रे निक्षिप्तः स्पर्शेन दुःखयति, नान्येषु गात्रावयवेषु, तद्वत्। अतः परिणामतापसंस्कारदुःखैर्दुःखमेव सर्वं विवेकिनः इति। (द्र० यो० भा० त० वै० पा० २ सू० १५)।

**विशेषपदार्थाभावः**—वैशेषिका हि नित्यद्रव्यवृत्तयोऽन्त्या विशेषा इत्याहुः। तथाहि योगिनो मुक्तांस्तुल्यजातिदेशकालान् व्यवधिरहितान् परस्परतो भेदेन प्रत्येकं तत्त्वेन च प्रतिपद्यन्ते। तस्मादस्ति कश्चिदन्त्यो विशेष इति। स एव च नित्यानां परमाण्वादीनां द्रव्याणां भेदक इति। एतद्योगमते नाभ्युपगतम्। यतो हि तत्रापि

देशलक्षणभेदो मूर्ति-व्यवधि-जातिभेदा एव च परमाणूनामन्यत्वे हेतवः सन्तीति। (द्र० यो० भा० त० वै० पा० ३ सू० ५३)।

**विशेषाणां तत्त्वान्तरपरिणामाभावः**—विशेषेभ्यः पृथिवीप्रभृतिभ्य उत्तरभावि तत्त्वान्तरं नास्ति, अतो विशेषाणां तत्त्वान्तरपरिणामो नास्ति। यच्च ब्रह्माण्डादिकं गोघटादिकञ्चास्ति परणामरूपं तत्सर्वं विशेषरूपेणैव अर्थात् पृथिव्यादिरूपेणैव गृहीतं न तु तत्त्वान्तर-रूपेण। अयं भावः—विशेषाणां परिणामास्तु सन्त्येव किन्तु ते तत्त्वान्तराणि न सन्तीति सिद्धान्तः। अतएव विशेषाणां धर्मलक्षणा-वस्थापरिणामा निरूप्यन्ते योगशास्त्रे। तत्त्वत्वञ्चात्र द्रव्यत्वम्, तच्च प्रधानपुरुषादिपञ्चविंशतितत्त्वेषु वर्तते इति तानि पञ्च-विंशतिस्तत्त्वान्युच्यन्ते। गोघटादिष्वपि द्रव्यत्वलक्षणस्य सत्त्वात् तदपि तत्त्वमिति मन्यते, किन्तु तत्त्वान्तरं न मन्यते, तत्त्वान्तर-लक्षणाभावात्। तत्त्वान्तरत्वं तु स्वावृत्तिद्रव्यत्वसाक्षाद्व्याप्यजाति-मत्त्वम्। तादृश्यश्च जातयः प्रधानत्वपुरुषत्वमहत्त्वादिपृथिवीत्वादि-पर्यन्ताः। एवञ्च गोघटादिवृत्तिः पृथिवीत्वजातिरेव पृथिव्यामपि वर्तत इति स्वावृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वस्य गोघटादाव-सत्त्वान्न तत्र तत्त्वान्तरलक्षणं गच्छतीतिन तत्तत्त्वान्तरम्। यदि च पञ्चविंशतितत्त्वेषु पञ्चविंशतिर्जातयो नाङ्गीक्रियरेन् तदा स्वावृत्ति-द्रव्यविभाजकोपाधिमत्त्वमेव तत्त्वान्तरत्वमिति स्वीकरणीयम्। (द्र० यो० वा० पा० २ सू० १९)।

**विशोका**—अस्मिताकार्यें मनसि समापन्नस्य चित्तस्य प्रवृत्तिः सूर्येन्दुग्रह-मणिप्रभारूपाकारेण विकल्पते, तथाऽस्मितायां समापन्नं चित्तं निस्त-रङ्गमहोदधिकल्पं शान्तमनन्तमस्मितामात्रं भवति। एषा द्वयी अपि प्रवृत्तिर्विशोका ज्योतिष्मतीत्युच्यते। (द्र० यो० भा० पा० १ सू० ३६)।

सर्वभावाधिष्ठातृत्वादिरूपा विशोका सिद्धिरिति सर्वदर्शनसङ्ग्रहकारः।

तथा च सूत्रम्—सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञत्वं च। ( पा० यो० सू० ३।४९ ) इति।

**विषयवती प्रवृत्तिः**—विषया गन्धादयस्ते सन्ति विषयत्वेन यस्याः सा विषयवती प्रवृत्तिः साक्षात्कारात्मिका, सापि चित्तं स्थितौ निबध्नाति। तथा हि—नासिकाग्रे गन्धोपलब्धिस्थाने धारणां कुर्वतो योगिनो यो दिव्यगन्धसाक्षात्कारोऽल्पेनैव कालेन भवति, सा गन्धप्रवृत्तिरिति तान्त्रिकपरिभाषा। एवं स्पर्शादिप्रवृत्तिरपि स्थितिनिबन्धिनीति बोध्यम्। ( द्र० यो० भा० त० वै० पा० १ सूत्र ३५ )।

**वीतरागविषयं चित्तम्**—वीतरागा ये कृष्णद्वैपायनप्रभृतयस्तेषां चित्तरूपं यदालम्बनं तत्र समापन्नं तेनोपरक्तं योगिनश्चित्त स्थितिपदं लभते। तथा च योगसूत्रम्—"वीतरागविषयं वा चित्तम्" इति। ( पा० १ सू० ३७ )।

**वीर्यम्**—धारणरूपः प्रयत्नः, स चासंप्रज्ञातस्योपायभूतः श्रद्धानन्तरं जायमानः। स च प्रयत्नो जीवेश्वरान्यतरपुरुषतत्त्वज्ञाने योगसाधने भवति। ( द्र० यो० वा० पा० १ सू० २० )

वीर्यमुत्साह इति भोजदेवः।

**वृत्तयः**—वृत्तयः पञ्चतय्यः प्रमाणविपर्ययविकल्पनिद्रास्मृतिरूपाः। ताश्च क्लेशहेतुकाः कर्माशयप्रचयक्षेत्रीभूताः क्लिष्टाः, तथा ख्यातिविषयाः गुणाधिकारविरोधिन्योऽक्लिष्टाः कथ्यन्ते। ( द्र० यो० भा० पा० १ सू० ५ )।

**वृत्तिः**—चित्तस्य वृत्तिः दीपस्य शिखेव द्रव्यरूपा भङ्गुराऽवस्थापरिणामात्मिका मूषानिषिक्तद्रुतताम्रवत् स्वसंयुक्तार्थाकारा त्रिगुणकार्यत्वात् सुखदुःखमोहाश्रयतया शान्तघोरमूढाख्याऽस्ति। सा च चित्तस्य गुणो नास्ति, यथा घटस्य रूपादिगुणः, न वा अग्नेः स्फुलिङ्ग इव चित्तस्य भागोंऽशरूपा। तथा च सांख्य सूत्रम्—

भागगुणाभ्यां तत्त्वान्तरं वृत्तिः सम्बन्धार्थं सर्पतीति। (द्र० यो० वा० पा० १ सू० ४)।

**वृत्तिनिरोधः**—वृत्तिनिरोधो हि चित्तस्य वृत्तिसंस्कारशेषावस्था, अभावस्याधिकरणावस्थाविशेषमात्ररूपत्वात्। सा चावस्था संस्कारमात्रैः परिणामधारा, निरोधकाले संस्कारतारतम्यरूपस्यैव चित्तपरिणामस्य सूत्रभाष्याभ्यां प्रतिपादितत्वात्। (द्र० यो० वा० पा० २ सू० १)।

**वृत्तिसारूप्यम्**—व्युत्थानकाले चित्तस्य या वृत्तयः शान्तघोरमूढाः ता एवाविशिष्टा अभिन्ना वृत्तयः पुरुषस्यापि भवन्तीति व्युत्थानदशायां पुरुषे वृत्तिसारूप्यं व्यपदिश्यते। सारूप्यमित्यत्र सशब्द एकपर्यायः। तेन चित्तस्य वृत्तय एव पुरुषस्य वृत्तयो भवन्ति, न त्वन्याश्चित्तस्य वृत्तयोऽन्याश्च पुरुषस्येति। अयमर्थः—जपाकुसुमस्फटिकयोरिव बुद्धिपुरुषयोः सन्निधानादभेदग्रहे बुद्धिवृत्तीः समारोप्य "शान्तोऽस्मि, दुःखितोऽस्मि, मूढोऽस्मी"त्यध्यवस्यति। यथा दर्पणतले प्रतिबिम्बितं मुखं मलिनमारोप्य शोचति आत्मानं मलिनोऽस्मीति। (द्र० यो० भा० त० वै० पा० १ सू० ४)।

**वैदेह्यम्**—देहरहिता विदेहाः करणेषु लीनाः, तेषां भावो वैदेह्यमिति वाचस्पतिमिश्राः (द्र० त० वै० पा० १ सू० १५)।

**विज्ञानभिक्षुस्तु**—स्थूलदेहविरहेऽपि लिङ्गशरीरेणैव येषां देवानां भोगस्ते विदेहास्तद्रूपता च वैदेह्यम्। (द्र० यो० वा० पा० १ सू० १५)।

**वैराग्यम्**—तापत्रयपरीतता विषयाणां दोषः, तत्परिभावनया दृष्टानुश्रविकविषयेषु यद्वैतृष्ण्यं तद्वैराग्यम्। तस्य चत्वारो भेदाः—यतमानसंज्ञा, व्यतिरेकसंज्ञा, एकेन्द्रियसंज्ञा, वशीकारसंज्ञा चेति।

**व्यतिरेकसंज्ञा**—इन्द्रियाणां विषयेषु रागादिकषायाणां परिपाचनाय आरम्भे प्रयत्ने कृते सति तेषु केचित् कषायाः पक्वाः पच्यन्ते च

केचित् । तत्र पक्ष्यमाणेभ्यः पक्त्वानां व्यतिरेकेणावधारणं व्यतिरेकसंज्ञा वैराग्यम् । ( द्र० यो० भा० त० वै० पा० १ सू० १५ ) ।

**व्यवसायस्य संस्कारजनकत्वम्**—"ग्राह्योपरक्तः प्रत्ययो ग्राह्यग्रहणोभयाकारनिर्भासस्तज्जातीयकं संस्कारमारभते । स संस्कारः स्वव्यञ्जकाञ्जनस्तदाकारामेव ग्राह्यग्रहणोभयात्मिकां स्मृतिं जनयति" इति भाष्यानुसारम्—"घटं जानामि" इत्यनुव्यवसायानन्तरम् जायमाना स्मृतिः ग्राह्यग्रहणोभयाकारा जायते ।

यद्यपि व्यवसायोऽपि "अयं घटः" इत्यादिरूपः संस्कारं जनयति तथापि तादृशसंकारजन्यं यत् ग्रहणाकाररहितम् घटज्ञानं तत् स्मृतिर्न भवति किन्तु अनुभवमध्ये एव तस्य प्रवेशः क्रियते । अत एव प्रमुषितत्ताकं पराभिमतं यत् स्मरणं तदपि संस्कारमात्रजन्यत्वेऽपि व्यवहारानुसारेणानुभवमध्य एव प्रवेश्यते योगमतानुयायिभिः । योगसूत्रस्थस्मृतिलक्षणे अनुभूतविषयासम्प्रमोषस्य विशेषणविधया निवेशात् । ( द्र० यो० वा० पा० १ सू० ११ ) ।

**व्यानः**—सर्वशरीरव्यापी वायुर्व्यान इति मिश्राः । व्यापिवृत्तिको बलवत्कर्महेतुः करणसामान्यवृत्तिर्व्यान इति विज्ञानभिक्षवः । ( द्र० त० वै० तथा यो० वा० पा० ३ सू० ३९ ) ।

**व्युत्थानम्**—अनिरुद्धवृत्तिता चित्तस्य, वृत्तिनिरोधादन्या चित्तस्यावस्था वा व्युत्थानम् ।

---*---

श्रद्धा—आगमानुमानाचार्योपदेशसमधिगततत्त्वविषयकः चेतसः सम्प्रसादोऽभिरुचिरतोच्छा श्रद्धा। सा हि जननीव कल्याणी योगिनं पाति विमार्गपातोत्पन्नादनर्थात् । ( द्र० यो० भा० त० वै० पा० १ सू० २० )। संप्रसादः प्रीतिर्योगो मे भूयादित्यभिलाषः श्रद्धेति विज्ञानभिक्षुः ।

श्रोत्राकाशयोः सम्बन्धसंयमः—आहङ्कारिकाणामपि सर्वश्रोत्राणामाकाशं = कर्णशष्कुलीविवरं प्रतिष्ठा, अतस्तदायतनं श्रोत्रं, तदुपकारापकाराभ्यां श्रोत्रस्योपकारापकारदर्शनात् । तच्चेदं श्रोत्रमाहङ्कारिकमयःप्रतिमम् अयस्कान्तमणिकल्पेन वक्तृमुखसमुत्पन्नेन वक्त्रस्थशब्देनाकृष्टं स्ववृत्तिपरम्परया वक्तृवक्त्रमागत्य शब्दमालोचयतीति योगदर्शनप्रक्रिया । अत्र श्रोत्राकाशयोराधाराधेयभावः सम्बन्धस्तत्र संयमेन योगिनो दिव्यं श्रोत्रं प्रवर्तते तेन च युगपत् सूक्ष्मव्यवहितविप्रकृष्टशब्दग्रहणसमर्थं भवति । । ( द्र० यो० भा त० वै० पा० ३ सू० ४१ ) ।

श्वासः—बाह्यस्य वायोराचमनं श्वासः ।

षट्कर्माणि—धौतिवस्तिस्तथा नेतिस्त्राटकं नौलिकं तथा ।
कपालभातिश्चैतानि षट्कर्माणि प्रचक्षते ॥
( द्र० ह० यो० प्र० उप० २ श्लो० २२ ) ।

एतेषां लक्षणानि तत एवानुसन्धेयानि ।

—०—

**सबीज : समाधिः**—सवितर्का, निर्वितर्का, सविचारा, निर्विचारा चेति चतस्रः समापत्तयो ग्राह्यविषयाः सबीजः समाधिः । एवं ग्रहीतृग्रहणविषयाः अपि सविकल्पाविकल्पभेदेन सानन्दा, आनन्दमात्रा, सास्मिता, अस्मितामात्रा चेति चतस्रः समापत्तयः सबीज एव समाधिरित्यष्टौ समापत्तयः संप्रज्ञातयोगनामा सबीजसमाधिरिति । ( द्र० यो० भा० त० वै० पा० १ सू० ४६ ) ।

विज्ञानभिक्षुस्तु—अवान्तरभेदेन सवितर्कनिर्वितर्करूपतो द्विधा भिन्नोऽपि स्थूलेऽर्थे एक एव समाधिस्तथाऽवान्तरभेदेन सविचारनिर्विचाररूपतो द्विधा भिन्नोऽपि सूक्ष्मेऽर्थे एक एव समाधिरिति मिलित्वा द्वौ । पुनश्च आनन्दानुगताऽस्मितानुगतौ च द्वौ सम्प्रज्ञातसमाधी मिलित्वा एता एव चतस्रः समापत्तयः सबीजसमाधिरित्याह । ( द्र० यो० वा० पा० १ सू० ४६ ) ।

**समाधिः**—समाधिशब्दः सम्प्रज्ञातासम्प्रज्ञातरूपाङ्गिभूतयोगवाचकः, तथा यमनियमाद्यष्टान्तर्गतो योगाङ्गवाचकश्च । तत्राङ्गिभूतयोगस्वरूपसमाधेर्लक्षणं "योगश्चित्तवृत्तिनिरोधः" इति सूत्रोक्तम् । योगाङ्गरूपसमाधेर्लक्षणञ्च "तदेवार्थमात्रं स्वरूपशून्यमिव समाधिः" इति निर्भासं सूत्रोक्तम् ।

**समाधिपरिणामः**—सर्वार्थता = विक्षिप्तता चित्तस्य धर्मः । एवमेकाग्रताऽपि चित्तस्य धर्मः । तथा च समाधौ सर्वार्थतायाः तिरोभाव एकाग्रतायाश्चाविर्भावो भवति । तयोर्द्वयोरपि धर्मयोः चित्तं धर्मिरूपेणानुगतं भवति। इत्थञ्च सर्वार्थतैकाग्रतयोस्तिरोभावाविर्भावौ एव चित्तस्य समाधिरूपः परिणाम इति । ( द्र० यो० भा० त० वै० पा० ३ सू० ११ ) ।

**समाधिप्रज्ञा**—सबीजसमाधौ जायमाना या प्रज्ञा सैव समाधिप्रज्ञेत्युच्यते । इयमेव ऋतम्भरा प्रज्ञा । इयं प्रज्ञा विशेषविषयिणी भवति, अतएव श्रुतानुमानप्रज्ञयोर्विषयाभ्यामस्या अन्य एव विषयो

भवति । लोकप्रत्यक्षेणाग्राह्यमपि सूक्ष्मव्यवहितविप्रकृष्टं वस्तु अनया समाधिप्रज्ञया निर्ग्राह्यमित्यहो माहात्म्यमस्याः । ( द्र० यो० भा० पा० १ सू० ४८-४९ ) ।

**समानः**—अशितपीताहारपरिणतिभेदं रसं तत्र तत्र स्थाने सममनुरूपं नयन् समानः शरीरोपगृहीतमारुतभेदः । आहृदयादाच नाभेरस्यावस्थानमिति वाचस्पतिमिश्राः । समाननरूपः करणमात्रस्य वृत्तिविशेषो हृदयान्नाभिपर्यन्तदेशे वर्तमान इति विज्ञानभिक्षुः । ( द्र० त० वै० तथा यो० वा० पा० ३ सू० ३९ ) ।

**समानजयः**—संयमविशेषजात् समानजयात् शारीरस्य तेजस उत्तेजनं भवति । केचित्तु तेजस उत्तेजनं कृत्वा ज्वलति सतीवत् स्वशरीरं दहतीत्याहुः । द्रष्टव्यं "समानजयाज्ज्वलनम्" इतिसूत्रभाष्यादिकम् ।

**समापत्तिभेदाः**—सवितर्का समापत्तिः, निर्वितर्का समापत्तिः, सविचारा समापत्तिः, निर्विचारा समापत्तिश्चेति सामान्यतः चतस्रः समापत्तयः । ( द्र० त० वै० पा० १ सू० ४२ ) ।

**समूहः परमाणुः**—सामान्यविशेषसमुदायो द्रव्यम् । समूहश्च द्विष्ठः—प्रत्यस्तमितभेदावयवानुगतः—शरीरं वृक्षो यूथं वनमिति । शब्देनोपात्तभेदावयवानुगतः—उभये देवमनुष्या इत्यत्र समूहस्य देवा एको भागो मनुष्याश्च द्वितीयो भागः । पुनश्च स समूहः द्विविधः युतसिद्धावयवोऽयुतसिद्धावयवश्चेति। तत्र युतसिद्धावयवः समूहो वनं सङ्घ इति । अयुतसिद्धावयवः समूहः शरीरं वृक्षः परमाणुरिति । एतावता भाष्यप्रबन्धेन परमाणुरपि सावयवः समूहरूप इति सिद्धान्त आयाति । ( द्र० यो० भा० पा० ३ सू० ४४ ) ।

**सत्त्वपुरुषयोः शुद्धिसाम्यम्**—यदा निर्धूतरजस्तमोमलं बुद्धिसत्त्वं पुरुषस्यान्यताप्रतीतिमात्राधिकारं दग्धक्लेशबीजं भवति, तदा पुरुषस्य शुद्धिसारूप्यमिवापन्नं भवति, तदा पुरुषस्योपचरित

भोगाभावः शुद्धिः। इत्युभयोः शुद्धिसाम्ये कैवल्यं भवति पुरुषस्येति। ( द्र० यो० भा० पा० ३ सू० ५५ )।

**सत्त्वपुरुषान्यताख्यातिः**—बुद्धिसत्त्वमन्यदन्यश्च पुरुष इति या ख्यातिः = साक्षात्कारः सा सत्त्वपुरुषान्यताख्यातिः।

**सविचारा समापत्तिः**—भूतसूक्ष्मेषु अभिव्यक्तधर्मकेषु देशकाल-निमित्तानुभवावच्छिन्नेषु या समापत्तिः सा सविचारा समापत्ति-रित्युच्यते। ( द्र० यो० भा० पा० १ सू० ४४ )।

**सवितर्का समापत्तिः**—गौरितिशब्दो गौरित्यर्थो, गौरिति ज्ञान-मिति अविभागेन विभक्तानामपि ज्ञानं जायते। विभज्यमानाश्चान्ये शब्दधर्मा अन्येऽर्थधर्माः अन्ये ज्ञानधर्मा इत्येतेषां विभक्तः पन्थाः। तत्र समापन्नस्य योगिनः समाधिप्रज्ञायां यो गवाद्यर्थः समारूढः, स यदि शब्दार्थज्ञानविकल्पानुविद्ध उपावर्तते तदा सा संकीर्णा सवितर्का समापत्तिरुच्यते। ( द्र० यो० भा० पा० १ सू० ४२ )।

**सर्वज्ञः**—बुद्धिसत्त्वावरकतमोऽपगमतारतम्येन यदिदमतीतानागत-प्रत्युत्पन्नानां प्रत्येकं समुच्चयेन च वर्तमानानामतीन्द्रियाणाम् ग्राह्यविषयाल्पत्वबहुत्वबहुतरत्वबहुतमत्वैरल्पं बहु बहुतरं बहुतमं वा ग्रहणं वर्धमानं सद् यस्य निरतिशयं = सर्वातिशयं जायते, स सर्वज्ञः। अत्र कश्चिद् किञ्चिदेवातीतादि गृह्णाति, कश्चिद् बहु, कश्चिद् बहुतरं कश्चिद् बहुतममिति ग्राह्यापेक्षया ग्रहणस्याल्पत्वं बहुत्वं भवति। तथा च यो हि प्रमेयमात्रं गृह्णाति स सर्वज्ञः। ( द्र० यो० भा० त० वै० पा० १ सू० २५ )। अत्रानुमानमपि भवति—सर्वज्ञबीजं सातिशयज्ञानं क्वचित् काष्ठा-प्राप्तं बाधकाभावे सति सातिशयत्वात् परिमाणवत् इति यत्र काष्ठाप्राप्तं स एव सर्वज्ञः। ( द्र० यो० वा० पा० १ सू० २५ )।

**सर्वज्ञातृत्वम्**—सत्त्वपुरुषान्यतासंयमवतश्चित्तस्य यथा सर्वभावा-धिष्ठातृत्वं तथा सर्वात्मकानां गुणानां शान्तोदिताव्यपदेश्य ( अतीत-

वर्तमानानागत ) धर्मत्वेन व्यवस्थितानामक्रमोपारूढं विवेकजं ज्ञानं भवतीति सर्वज्ञातृत्वं जायत इति। ( द्र० यो० भा० त० वै० पा० ३ सू० ४९ )।

सर्वात्मनां सर्वेषां बद्धमुक्तपुरुषाणां गुणानां च शान्तादिधर्मविशिष्टानां चैकदैव ज्ञानं सर्वज्ञातृत्वमिति विज्ञानभिक्षुः। ( द्र० यो० वा० पा० ३ सू० ४९ )। इयं सिद्धिर्विशोकेति गीयते योगिजनैः।

**सर्वज्ञानम्**—स्वप्रतिभोत्थमनौपदेशिकं संसारतरणोपायत्वात् तारकं विवेकजज्ञानस्य पूर्वरूपं यथा सूर्योदयस्य पूर्वरूपं प्रभा। तेन प्रातिभज्ञानेन सर्वं विजानाति योगी। तथाच योगसूत्रम्—प्रातिभाद्वा सर्वम् इति। ( पा० ३ सू० ३३ )।

**सर्वभावाधिष्ठातृत्वम्**—सत्त्वपुरुषान्यतासंयमवतश्चित्तस्य जडप्रकाशात्मकसर्वभावाधिष्ठातृत्वं जायत इति। ( द्र० यो० भा० त० वै० पा० ३ सू० ४९ )।

**सर्वभूतरुतज्ञानम्**—गौरिति शब्दो, गौरित्यर्थो, गौरितिप्रत्ययः, इत्थं शब्दार्थप्रत्ययानामितरेतराध्यासात् संकरः प्रतीयते। किन्तु तेषां प्रविभागसंयमात् सर्वभूतरुतज्ञानं भवतीति। ( द्र० यो० वा० पा० ३ सू० १७ )।

**सर्वं सर्वात्मकम्**—जलं हि रसरूपस्पर्शशब्दवत् भूमिश्च गन्धरसरूपस्पर्शशब्दवती, तयोः पारिणामिकं वैश्वरूप्यं वनस्पतिलतागुल्मादिषु मूलफलप्रसवपल्लवादिगतरसादिरूपेण दृष्टम्। सोऽयम् अनेवमात्मिकाया भूमेरनीदृशस्य वा जलस्य परिणामो न भवितुमर्हति। तथा स्थावराणां पारिणामिकं जङ्गमेषु मनुष्यपशुमृगादिषु रसादिवैचित्र्यं दृष्टम्। एवं जङ्गमानां पारिणामिकं स्थावरेषु दृष्टम्। रुधिरावसेकात् किल दाडिमीफलानि तालफलप्रमाणानि भवन्ति। एवञ्च सर्वं जलभूम्यादिकं सर्वरसाद्यात्मकं सिध्यति। ( द्र० यो० वा० पा० ३ सू० १४ )।

**साक्षित्वम्**—करणानपेक्षं साक्षाद् भासकत्वं साक्षित्वम्। अत एव विषयाणां भानं तदाकारवृत्तिद्वारा भवति, वृत्तिभाने तु वृत्त्यन्तरं नापेक्ष्यते। अतो वृत्तिः साक्षिभास्येत्युच्यते। अविकारेण द्रष्टृत्वं साक्षित्वमित्यपि साक्षिलक्षणम्। अतः पुरुषः साक्षी भवति। ( द्र० यो० वा० पा० १ सू० ७ )।

**सामान्यविशेषसमुदायो द्रव्यम्**—सामान्यविशेषाश्रयो द्रव्यमिति वैशेषिकाः, तत्पातञ्जला नाङ्गीकुर्वन्ति। यतः सामान्यविशेषाश्रयो द्रव्यमित्यातिष्ठमानैस्तैरपि सामान्यविशेषसमुदायोऽनुभूयमानो नापह्नोतव्यः। न च तदपह्नवे तदाधारो द्रव्यमिति संभवति। तस्मात् समुदितौ तावेव द्रव्यं भवतु। न तु ताभ्यां सामान्यविशेषाभ्यां तत्समुदायाच्च तदाधारमपरं द्रव्यमुपलभामहे। यथा ग्रावभ्यो ग्रावसमुदायाच्च तदाधारमपरं पृथग्विधं शिखरं नोपलभामहे। तस्मात् समूहो द्रव्यम्। समूहो द्विविधो, युतसिद्धावयवः समूहो वनं सङ्घ इत्यादिः। तथाऽयुतसिद्धावयवो यथा—शरीरं वृक्षः परमाणुरिति। तयोरयुतसिद्धावयवभेदानुगतः समूह एव द्रव्यमिति पतञ्जलिः। ( द्र० यो० भा० त० वै० पा० ३ सू० ४४ )।

**सार्वभौमः**—चित्तस्य भूमयोऽवस्थाः मधुमती-मधुप्रतीका-विशोका-संस्कारशेषाः, तासु सर्वासु भूमिषु विदितः चित्तवृत्तिनिवृत्तिलक्षणो योगः सार्वभौम इत्युच्यते। यद्यपि क्षिप्तं, मूढं विक्षिप्तमपि चित्तस्य भूमयः सन्ति तथापि क्षिप्तमूढयोः सत्यपि परस्परापेक्षया वृत्तिनिरोधे पारम्पर्येणापि निःश्रेयसहेतुत्वाभावात्, निरोधस्वरूपोपघातकत्वाच्च योगपक्षाद्दूरोत्सारितत्वम्। विक्षिप्ते तु सन्नपि कादाचित्कश्चित्तस्थेमा विक्षेपस्य चित्तचाञ्चल्यस्योपसर्जनीभूत एवेति सोऽपि नास्ति योगपक्षे। तस्मात् मधुमत्यादिचतुर्भूमिकास्वेव वर्तमानश्चित्तवृत्तिनिरोधो योग इति योगस्य सार्वभौमत्वमुक्तम्। ( द्र० यो० भा० त० वै० पा० १ सू० १ )।

**सिद्धदर्शनम्**—शिरःकपालेऽन्तश्छिद्रं प्रभास्वरं ज्योतिरस्ति, तत्र संयमे कृते सिद्धानां द्यावापृथिव्यन्तरालसंचारिणां दर्शनं जायते। तथा च सूत्रम्—"मूर्धज्योतिषि सिद्धदर्शनम्" इति। (पा० ३ सू० ३२)। अत्र मूर्धशब्देन सुषुम्नानाडी लक्ष्यत इति तत्ववैशारदीकारः।

**सिद्धिहेतवः**—सिद्धीनामणिमादिलाभानां हेतवो जन्मौषधिमन्त्रतपःसमाधयः सन्ति। तथा च योगसूत्रम्—"जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः (पा० ४ सू० १) इति।

**सुषुम्नानाडी**—उदरोरसोर्मध्येऽष्टदलमधोमुखं पद्मं तिष्ठति, तन्मध्ये सूर्यमण्डलमुकारो जाग्रतस्थानम्, तस्योपरि चन्द्रमण्डलमुकारः स्वप्नस्थानम्, तस्योपरि वह्निमण्डलं मकारः सुषुप्तिस्थानम्। तत्र कर्णिकायामूर्ध्वमुखी सूर्यादिमण्डलमध्यगा ब्रह्मनाडी, ततोऽप्यूर्ध्वं सुषुम्नानामनाडी, यया बाह्यान्यपि सूर्यादीनि प्रोतानि। सा हि चित्तस्य स्थानम्। (द्र० त० वै० पा० १ सू० ३६)।

सुषुम्नासम्बन्धे योगचिन्तामणौ समुद्धृतम्—

"कन्दस्थानं मनुष्याणां देहमध्यान्नवाङ्गुलम्।
चतुरङ्गुलविस्तारमायामञ्च तथाविधम्॥
अण्डाकृतिवदाकारं भूषितं तत्त्वगादिभिः।
कन्दमध्ये स्थिता नाडी सुषुम्नेति प्रकीर्तिता।
तिष्ठन्ति परितः सर्वाः चक्रेऽस्मिन् नाडीसंज्ञिकाः॥
नाडीनामपि सर्वासां मुख्या गार्गि! चतुर्दश।
इडा च पिङ्गला चैव सुषुम्ना च सरस्वती॥
वारुणी चैव पुषा (पुष्पा) च हस्तिजीह्वा पयस्विनी।

विश्वोदरी कुहुश्चैव शङ्खिनी च यशस्विनी ॥

अलम्बुषा च गान्धारी मुख्यास्त्वेताश्चतुर्दश ।
तासां मुख्यतमास्तिस्रः तिसृष्वेकोत्तमा मता ।
मुक्तिमार्गेति सा प्रोक्ता सुषुम्ना विश्वधारिणी ॥
कन्दस्य मध्यमे मार्गे सुषुम्ना सुप्रतिष्ठिता ।
पृष्ठवंशस्थितेनास्थ्ना सह मूर्ध्नि व्यवस्थिता ॥
मुक्तिमार्गेति सा प्रोक्ता ब्रह्मरन्ध्रेति कीर्तिता ।
अव्यक्ता सैव विज्ञेया सूक्ष्मा च वैष्णवी स्मृता' ॥

अस्यास्तत्तत्प्रदेशविशेषावच्छेदेन मुक्तिप्रदत्वात् तत्तत्प्रदेशानामवि-मुक्तत्वं समाख्यातम्—

"भ्रूमध्ये नाभिमध्ये च हृदयेऽपि च मूर्धनि ।
तथाविमुक्तमादित्ये वाराणस्यां व्यवस्थितम् ॥

अत्राविमुक्तशब्दो विमुक्तशब्दपरः । यथा विमुक्तशब्द आधिदैविके द्यावापृथिव्योः सन्धिरूपे आदित्ये व्यवस्थितः, यथा चाधिभौतिके वाराणसीसंज्ञके पुरे व्यवस्थितः, तथा ऽऽध्यात्मिके भ्रूमध्ये, हृदये, मूर्ध्नि च चक्रविशेषावच्छिन्ने सुषुम्नाप्रदेशे व्यवस्थित इति । ( द्र० यो० चि० प० २ पृ० १०५-१०६ ) ।

सुषुम्ना, ब्रह्मरन्ध्रं, महापथः, श्मशानम्, शाम्भवी, मध्यमार्गश्चेति पर्यायाः । द्र० ह० यो० प्र० उप० ३ श्लो० ४ ) ।

सूक्ष्मम्—तन्मात्राणि विशेषविनिर्मुक्तानि तदवयवाश्च परमाणवो भूतानां सूक्ष्मं रूपमिति विवरणकारः ।

भूतानां सूक्ष्मं रूपं तन्मात्रपञ्चकं साक्षात्कारणत्वात्। तस्य भूत-तन्मात्रस्य एकोऽवयवकार्यं परमाणुः सोऽपि घटादिवदेव सावयवः, द्वित्र्यादितन्मात्रकार्यत्वात्, अन्यथा स्थूलत्वानुपपत्तेः। इत्येवं पर-माणुतोऽपि सूक्ष्मत्वात्, तन्मात्राणि सूक्ष्माणीति वृत्तिकारो नागेशभट्टः। परमाणवः तन्मात्रारब्धा इति नागेशभट्टाभिप्रायः।

वाचस्पतिमतेऽपि परमाणुस्तन्मात्रस्यैवैकोऽवयवः इति यथा परमाणु-र्भूतानां सूक्ष्मं रूपं तथा सर्वतन्मात्राणि भूतानां सूक्ष्मं रूपमिति। ( द्र० यो० भा० त० वै० पा० ३ सू० ४४ )।

विज्ञानभिक्षुस्त्वाह—साक्षात्कारणत्वमेवात्र सूक्ष्मत्वमभिप्रेतम्। तस्य भूतस्यैकश्चरमोऽवयवः परमाणुः सोऽपि घटादिवदेव सावयवः, अन्यथा स्थूलत्वानुपपत्तेः, शान्तघोरमूढरूपविशेषानुपपत्तेश्चेत्येव-मित्यतः सर्वतन्मात्राण्येव भूतकारणानि, अवयवान्तरासंभवात्। अतस्तान्येव सूक्ष्मं रूपमिति। ( द्र० यो० वा० पा० ३ सू० ४४)। भूतानां सूक्ष्मं रूपं परमाणवस्तेषाञ्च सूक्ष्मं रूपं तन्मात्राणी ति मणि-प्रभाकारः।

**सूक्ष्मव्यवहितविप्रकृष्टज्ञानम्**—ज्योतिष्मतीनाम्नी वुद्धिपुरुषान्यता-साक्षात्काररूपिणीय। मनसःप्रवृत्तिरुच्यते, तस्या य आलोकः = अर्थात् तत्कालीनो यः सत्त्वप्रकाशस्तं प्रकाशं योगी सूक्ष्माद्यर्थेषु विन्यस्य साक्षात्करोति तदर्थं संयमं नापेक्षते। अर्थात् चक्षुर्न्यास-मात्रेण घटादिदर्शनवत् शुद्धसत्त्वप्रतिसंधानमात्रेणैव सूक्ष्म-व्यवहित-विप्रकृष्टानां परमाण्वादीनां साक्षात्कारो भवतीति। ( द्र० यो० वा० पा० ३ सू० २५ )।

**सोपक्रमं कर्म**—यत् खल्वैकभविकं कर्म जात्यायुर्भोगहेतुः तच्च किञ्चित् कालानपेक्षमेव भोगदानाय प्रस्थितं दत्तबहुभोगम् अल्पावशिष्टफलं प्रवृत्तव्यापारं केवलं तत्फलस्य सहसा एकेन शरीरेण भोक्तुमशक्य-

त्वात् विलम्बते, तदिदं सोपक्रमं कर्म । ( द्र० यो० भा० त० वै० पा० ३ सू० २२ ) ।

विज्ञानभिक्षुस्त्वाह—यत् कर्म तीव्रवेगेन फलदातृ, यथा कलिकालीनप्रजासु बाल्ययौवनवार्धकाद्यवस्थानां झटित्येवारम्भकं भवति, तत्सोपक्रमम् । ( द्र० यो० वा० पा० ३ सू० २२ ) ।

**संकोचविकासि चित्तम्**—चित्तं हि घटप्रासादप्रदीपकल्पं संकोचविकासशालि शरीरपरिमाणाकारमात्रं न विभु नाप्यणु इति केचित् प्रतिपद्यन्ते । तत्तु योगाचार्याः न मृष्यन्ते । योगमते चित्तन्तु विभु केवला वृत्तिरेवास्य सङ्कोचविकासशालिनीत्याचार्यः । ( स्वयम्भूः ) ( द्र० यो० भा० पा० ४ सू० १० ) ।

**संप्रज्ञातः**—वितर्कविचारानन्दास्मितानां स्वरूपैरनुगतश्चित्तवृत्तिनिरोधः सम्प्रज्ञातसमाधिः । अतएव एतैरनुगतत्वात् सम्प्रज्ञातभेदोऽपि चतुर्विधो भवति—वितर्कानुगतो, विचारानुगत, आनन्दानुगतोऽस्मितानुगतश्चेति । ( द्र० यो० भा० त० वै० पा० १ सू० १७ ) ।

**संयमः**—धारणाध्यानसमाधीनां मिलितानामेका संज्ञा "संयमः" इत्यस्ति । तथा च योगसूत्रम्—"त्रयमेकत्र संयमः" । पा० ३ सू० ४ ) ।

**संवेगः**—संवेगो वैराग्यमिति वाचस्पतिमिश्राः । उपायानुष्ठाने शैघ्र्यमिति विज्ञानभिक्षवः । इदमेव मतं योगमञ्जरीकारस्य । संवेग उपक्रम इति विवरणकारः । क्रियाहेतुदृढतरः संस्कार इति भोजवृत्तिः । मणिप्रभाकाराः वाचस्पतिमिश्रानेवानुसरन्ति संवेगो वैराग्यमिति । ( द्र० त० वै०, यो० वा०, भो० वृ०, म० प्र० पा० भा० वि०, पा० १ सू० २१ ) ।

**संसारक्रमसमाप्तेरवचनीयत्वम्**—अस्य संसारस्य क्रमसमाप्तिः कदाचिदस्ति न वेति प्रश्ने उत्तरं भवति "अवचनीयमेतत्" इति ।

अयं तु एकान्ततोऽवचनीयः प्रश्नः संसारोऽयमन्तवानथानन्त इति। विशेषावधारणन्तु संभवत्येव—यथा कुशलस्यास्ति संसारक्रमपरिसमाप्तिर्नेतरस्येत्यन्यतरावधारणेऽदोषः।

अयं भावः—क्रमेण मोक्षे सर्वेषां मोक्षात् संसारोच्छेद इत्यनुमानम्। एतच्चानुमानमागमसिद्धमोक्षमाश्रित्यैव प्रवर्तितुमर्हति। तथा च यो हि मोक्षप्रतिपादकागमस्य प्रमाणभावमभ्युपगच्छति स कथं तमेव प्रधानविकारनित्यतायामप्रमाणीकुर्यात्। तस्मादागमवाधितविषयमेतदनुमानं न संसारोच्छेदे प्रमाणं स्यात्। श्रूयते हि श्रुतिस्मृतीतिहासपुराणेषु सर्गप्रतिसर्गपरम्पराया अनादित्वमनन्तत्वं चेति। अपि च सर्वेषामेवात्मनां संसारस्य न तावद् युगपदुच्छेदः संभवी। न हि पण्डितरूपाणामपि अनेकजन्मपरम्पराभ्यासपरिश्रमसाध्या विवेकख्यातिप्रतिष्ठा, किमु वक्तव्यम्, प्राणभृन्मात्रस्य स्थावरजङ्गमादेरेकदाऽकस्माद्भवितुमर्हतीति। न च कारणयौगपद्यं युज्यते। क्रमेण तु विवेकख्यातौ असंख्येयानां क्रमेण मुक्तौ न संसारोच्छेदोऽनन्तत्वाज्जन्तूनामिति। (द्र० यो० भा० त० वै० पा० ४ सू० ३३)।

**संस्कारशेषा**—चित्तस्य मधुमत्यादिष्ववस्थासु मध्ये चतुर्थी अवस्था संस्कारशेषाऽसम्प्रज्ञातसमाधिरूपा। परवैराग्यद्वारा सर्वासां वृत्तीनां निरोधात् संस्कारमात्रशेषतयाऽन्वर्थसंज्ञेयमवस्थेति।

**स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणम्**—मधुमतीं भूमिं साक्षात्कुर्वत ऋतम्भरप्रज्ञस्य योगिनः स्थानिनो देवाः सत्त्वविशुद्धिमनुपश्यन्तः स्थानैरुपनिमन्त्रयन्ते—"भो इहास्यताम्, इह रम्यताम्, कमनीयोऽयं भोगः, कमनीयेयं कन्या, रसायनमिदं जरामृत्युनिवारकं, वैहायसमिदं यानम्, अमी कल्पद्रुमाः, पुण्या मन्दाकिनी, सिद्धा महर्षयः, उत्तमा अनुकूला अप्सरसः, दिव्ये श्रोत्रचक्षुषी, वज्रोपमः कायः,

स्वगुणैः सर्वमिदमुपार्जितमायुष्मता प्रतिपद्यताम्, इदमक्षयमजरम-मरस्थानं देवानां प्रियमिति ।"

एवमभिधीयमानः सङ्गदोषान् भावयेत् "घोरेषु संसाराङ्गारेषु पच्यमानेन मया जननमरणान्धकारे विपरिवर्तमानेन कथञ्चिदासादितः क्लेशतिमिरविनाशी योगप्रदीपः । स खल्वहं लब्धालोकः कथमनया विषयमृगतृष्णया वञ्चितस्तस्यैव पुनः प्रदीप्तस्य संसाराग्नेरात्मानमिन्धनी कुर्याम्" इति ।

सङ्गमकृत्वा स्मयमपि न कुर्यात्—"एवमहं देवानामपि प्रार्थनीयः सम्पन्न इति ।" ( द्र० यो० भा० पा० ३ सू० ५१ )

स्थितिः—वृत्त्याख्यगतिशून्यता चित्तस्य स्थितिः निद्रेति यावत् । चित्तस्य सर्वे तामसा गुणाः स्थितौ समाविशन्तीति चित्तस्य स्थितिशीलत्वं तमःप्रभावात् । ( द्र० यो० वा० पा० १ सू० २ ) ।

स्थूलम्—पार्थिवाः, जलीयास्तैजसा, वायवीया, आकाशीयाः शब्दस्पर्शरूपरसगन्धा यथासंभवं विशेषाः षड्जगान्धारादयः, शीतोष्णादयः, नीलपीतादयः, कषायमधुरादयः सुरभ्यादयः । एते हि नामरूप-प्रयोजनैः परस्परतो भिद्यन्ते इति हेतोः विशेषाः कथ्यन्ते । एतेषां पञ्च पृथिव्यां सन्ति । गन्धवर्जं चत्वारोऽप्सु । गन्धरसवर्जं त्रयस्तेजसि । गन्धरसरूपवर्जं द्वौ वायौ । शब्दमात्रमाकाशे । त एते विशेषाः आकारादिभिः धर्मैः सह विशेषशब्देन परिभाषिताः शास्त्रे इति । ( द्र० यो० भा० त० वै० पा० ३ सू० ४४ ) ।

स्थैर्यम्—जिह्वाया अधस्तात् तन्तुः, ततोऽधस्तात् कण्ठः, ततोऽधस्तात् कूपः, ततोऽधस्तात् उरसि कूर्माकारा नाडी अस्ति । सैव कुण्डलितसर्पवदवस्थिततया कूर्माकारं हृदयपुण्डरीकाख्यं नाडीचक्रमुच्यते । तत्र कृतसंयमो योगी चित्तस्थैर्यं लभते इति । ( द्र० यो० भा० यो० वा० पा० ३ सू० ३१ ) ।

**स्फोटः**—यथा बीजाङ्कुराद्यनेकावस्थो वृक्षरूपो धर्मी क्रमिकाभ्यस्ताभ्यो बीजाद्यवस्थाभ्योऽतिरिक्तः पल्लवादिरूपाशेषावस्थया व्यज्यते "अयमाम्रवृक्षो न वृक्षान्तरम्" इत्येवंरूपेण। स च वृक्षधर्मी बीजादिभ्यो भिन्नाभिन्नः, भेदाभेदयोरनुभवात्। तथैव गकारौकाराद्यनेकावस्थो गौरित्यादिरखण्डः स्फोटशब्दः क्रमिकाभ्यो गकाराद्यवस्थाभ्योऽतिरिक्तः आनुपूर्वीविशेषविशिष्टया विसर्जनीयादिरूपचरमावस्थया व्यज्यते इदं "गौः" इति पदं न तु "गौर" इतीत्यादिरूपेण। तच्च स्फोटपदं गकारादिवर्णेभ्यो भिन्नाभिन्नं, भेदाभेदयोरनुभवात्। स च पदाख्यः शब्दोऽर्थस्फुटीकरणात् स्फोट इत्युच्यते। अस्य स्फोटशब्दस्य च कारणम् एकप्रयत्नजन्यो ध्वनिविशेषः, प्रयत्नभेदेन तूच्चारणे व्यवधाने सत्येकपदव्यवहाराभावात्। अतो गौरित्येकपदमिति व्यवहार एव स्फोटे प्रमाणम्, वर्णानामनेकत्वेन तैरेकत्वव्यवहारस्याञ्जस्येनानुपपत्तेः। तथा प्रत्येकवर्णादनुत्पद्यमानस्यार्थप्रत्ययस्य हेतुत्वं च स्फोटे प्रमाणम्। यदि चानुपूर्वीविशिष्टसमूहस्यैकत्वादेकत्वव्यवहारः तेनैव रूपेणार्थप्रत्ययहेतुत्वञ्च स्वीक्रियते तर्हि संयोगविशेषावच्छिन्नावयवसमूहादेव घटादौ एकत्वव्यवहारस्य जलाहरणादेश्चोपपत्त्या घटाद्यवयविमात्रोच्छेदप्रसङ्गः, युक्तिसाम्यात्।

न चैवं युक्तिसाम्याद् वाक्यमपि स्फोटरूपमेकैकं स्याद् इति चेद् बाधकाभावेन वाक्यस्फोटस्यापीष्टत्वात्। तस्मादस्ति स्फोट इति पातञ्जलमतम्। (द्र० यो० वा० पा० ३ सू० १७)।

विस्तरस्तूक्तसूत्रीयतत्त्ववैशारदीतोऽवगन्तव्यः।

**स्मृतिः**—प्रमाणादिभिरनुभूते विषये योऽसंप्रमोषोऽस्तेयं सा स्मृतिःवृत्तिविशेषः। संस्कारमात्रजन्यस्य स्मृत्यात्मकज्ञानस्य स एव विषय आत्मीयो, यो हि संस्कारजनकस्य पूर्वानुभवस्य विषयभूतः पूर्वानुभवविषयातिरिक्तविषयपरिग्रहस्तु सम्प्रमोषः स्तेयं स्यात्।

अयमाशयः— सर्वं प्रमाणादयोऽनधिगतमर्थं सामान्यतो विशेषतो वाऽधिगमयन्ति । स्मृतिस्तु न पूर्वानुभवमर्यादामतिक्रामति । सा हि अनुभवसमानविषया वा स्यात् ततो न्यूनविषया वा स्यात्, न तु तदधिकविषयेति । तथा च सूत्रम् "अनुभूतविषयाऽसंप्रमोषः स्मृतिः" इति । ( द्र० त० वै० पा० १ सू० ११ )

"श्रद्धावीर्यस्मृति समाधिप्रज्ञापूर्वक इतरेषाम्" इतिसूत्रघटकं स्मृतिपदं तु योगान्तरङ्गसाधनभूतस्य ध्यानस्य वाचकम् ।

**स्मृतिपरिशुद्धिः**—अर्थमात्रनिर्भासायां स्वरूपशून्यायामिव निर्वितर्कायां समापत्तौ स्मृतिपरिशुद्धिर्हेतुः । स्मृतिपरिशुद्धिश्च शब्दसङ्केतश्रुतानुमानज्ञानविकल्पात्मकस्मृतिपरिशुद्धिरेव । परिशुद्धिरत्रापगमः । अर्थात् निर्वितर्कायां समापत्तौ "अस्यार्थस्यामुकं पदं वाचकम्" इति शब्दसङ्केतज्ञानरूपो विकल्पो निवर्तते । तथा "पूर्वं श्रुतोऽनुमितो वाऽयमर्थः" इवि श्रुतज्ञानरूपो विकल्पो अनुमितार्थज्ञानरूपो विकल्पश्च निवर्तत इतीयमेव स्मृतिपरिशुद्धिरर्थमात्रनिर्भासायाःनिर्वितर्कायाः समापत्तेरिति । ( द्र० यो० मा० त० वै० पा० १ सू० ४३ ) ।

अर्थात् तत्रार्थातिरिक्तं न किमपि भासते, ज्ञानस्वरूपमपि न भासते कीदृगिदं ज्ञानमिति ।

**स्वबुद्धिसंवेदनम्**— यद्यपि चितिशक्तिरपरिणामिनी क्रियाशून्या चास्ति तथापि चितेः स्वबुद्धिसंवेदनं चितिप्रतिबिम्बाधारतया चिद्रूपतापत्तौ सत्यां भवति । यथा हि चन्द्रस्य क्रियामन्तरेणापि सङ्क्रान्तचन्द्रप्रतिबिम्बममलं जलमचलमपि चन्द्रमसं चलमिवावभासयति तथा विनापि चितिव्यापारमुपसङ्क्रान्तचितिप्रतिबिम्बं चित्तं स्वगतया क्रियया चितिशक्तिं क्रियावतीमसङ्गतामपि सङ्गतामवभासयद् निजभोग्यताशक्त्या तस्या भोक्तृभावमापादयति । इदमेव

चितिशक्तेः स्वबुद्धिसंवेदनम् । ( द्र० यो० भा० त० वै० पा० ४ सू० २२ ) ।

विज्ञानभिक्षुस्तु चितिशक्तावेव बुद्धिवृत्तिप्रतिबिम्बं समर्थयन् स्वयमप्रतिसङ्क्रमाया अपि चितिशक्तेः स्वप्रतिबिम्बितबुद्धिवृत्त्याकारतापत्त्यैव स्वबुद्धिसंवेदनं भवतीत्याह । ( द्र० यो० वा० पा० ४ सू० २२ ) ।

**स्ववोधसङ्क्रान्तिः**—शब्दद्वारा आहर्षिचत्तवर्तिज्ञानसदृशस्य ज्ञानस्य श्रोतृचित्ते समुत्पादःस्ववोधसङ्क्रान्तिः ।

**स्वप्नः**—प्रत्यस्तमितबाह्येन्द्रियवृत्तेर्मनोमात्रेणैव यत्र भोक्तृत्वमात्मनः स स्वप्न इति भोजवृत्तिः । ' द्र० यो० सू० पा० १ सू० ३८ ) ।

बाह्यसकलवृत्तिपरित्यागेन चेतसोऽभ्यन्तरवाहिता स्वप्न इति योगमञ्जरी । ( पा० १ का० २५ ) ।

**स्वप्नज्ञानालम्बनम् चित्तम्**—यदा खलु स्वप्ने विविक्तवनसंनिवेशवर्तिनीमुत्कीर्णामिव चन्दमण्डलात् कोमलमृणालशकलानुकारिभिरङ्गप्रत्यङ्गैरुपेताम् अभिजातचन्दकान्तमणिमयीम् अतिसुरभिमालतीमल्लिकामालाहारिणीं मनोहरां भगवतो महेश्वरस्य प्रतिमामाराधयन्नेव प्रबुद्धः प्रसन्नमनास्तदा तामेव स्वप्नज्ञानालम्बनीभूतामनुचिन्तयतस्तस्य तदेकाकारमनसस्तत्रैव चित्तं स्थितिपदं लभते इति । ( द्र० त० वै० पा० १ सू० ३६ ) ।

स्वप्नरूपं ज्ञानं स्वप्नज्ञानम्, तदालम्बनकं चित्तम्=प्रपञ्चज्ञाने स्वप्नदृष्टिमच्चित्तमेव स्वप्नज्ञानालम्बनं चित्तमिति विज्ञानभिक्षुः । इयञ्च दृष्टिः कामदुघत्वादिगुणैर्वाचि धेनुदृष्टिवत् क्षणभङ्गुरविषयकत्वादिगुणैर्जाग्रद्ज्ञाने स्वप्नदृष्टिरूपा । एतदपि वैराग्यद्वारा चित्तस्थैर्यहेतुरिति । ( द्र० यो० वा० पा० १ सू० ३८ ) ।

**स्वरूपम्**—भूतानां स्वरूपम् । यथा—मूर्तिः = सांसिद्धिकं काठिन्यम् भूमेः स्वरूपम् । स्नेहो मज्जापुष्टिबलाधानहेतुः जलस्य । उष्णता

वह्नेः। वहनशीलता (प्रणामिता) वायोः स्वरूपम्। सर्वतोगतिराकाशः सर्वत्र शब्दोपलब्धिदर्शनात्। (द्र० यो० भा० त० वै० पा० ३ सू० ४४)।

**स्वरूपावस्थानम्**—पुरुषस्य हि चैतन्यं स्वरूपम् अनौपापाधिकम् न तु बुद्धिबोधः शान्तादिरूपः। औपाधिको हि सः, स्फटिकस्येव स्वभावस्वच्छधवलस्य जपाकुसुमसन्निधानोपाधिररुणिमा। न चोपाधिनिवृतावुपहितनिवृत्तिः, अतिप्रसङ्गात्। तस्माद् वृत्तिनिरोधकाले पुरुषस्य स्वरूपेऽनौपाधिकचैतन्येऽवस्थानं भवतीति। (द्र० त० वै० पा० १ सू० ३)।

विज्ञानभिक्षुराह—यथा जपापाये स्फटिकस्य स्वस्वरूपेऽलोहितेऽवस्थानं तथा वृत्त्यभावे पुरुषस्य वृत्तिप्रतिबिम्बशून्ये स्वस्वरूपेऽवस्थानमिति (द्र० यो० वा० पा० १ सू० ३)।

**स्वस्वामिभावः**—यथाऽयस्कान्तमणिः स्वस्मिन्नेवायःसन्निधीकरणमात्रात् शल्यनिष्कर्षणाख्यमुपकारं कुर्वन् स्वामिनः स्वं भवति, भोगसाधनत्वात्; तथैव चित्तमप्ययःसदृशविषयजातस्य स्वस्मिन् सन्निधीकरणमात्रात् दृश्यत्वरूपमुपकारं कुर्वत् पुरुषस्य स्वामिनः स्वं भवति, भोगसाधनत्वात्। अतश्चित्तपुरुषयोरनादिः स्वस्वामिभावः सम्बन्ध इति। (द्र० यो० वा० पा० १ सू० ४)।

**स्वाध्यायः**—अभिप्रेतमन्त्रजपादिलक्षणे स्वाध्याये प्रकर्षमापन्ने योगिनः स्वेष्टदेवतायाः सन्निधानं = प्रत्यक्षं भवतीति भोजवृत्तिः। (पा० २ सू० ४४।

इष्टमन्त्रादिजपात् (स्वाध्यायात्) स्वेष्टदेवतायाः सम्भाषणादि सिध्यति इति मणिप्रभा, पा० २ सू० ४४।

हस्तिवलादीनि—हस्तिबले संयमाद् हस्तिवलो भवति। वैनतेयवले संयमाद् वैनतेयबलो भवति। वायुवले संयमाद् वायुवलो भवति। अर्थात् यस्य बले संयमस्तस्य वलं लभत इति। (द्र० यो० भा० त० वै० पा० ३ सू० २४)।

हिरण्यगर्भः—योगस्यादिवक्ता हिरण्यगर्भ एव यथा सांख्यस्य कपिलः। तदुक्तम् याज्ञवल्क्येन—

"हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः" इति।

हिंसा—केनापि प्रकारेण कदापि कस्यापि भूतस्याभिद्रोहो हिंसा। सा च स्वयं कृता वा स्यात्, परतः कारिता वा स्यात्, अनुमोदिता वा स्यात्, लोभक्रोधमोहान्यतमप्रयुक्ता स्यात्, मृदुः, मध्या, अधिमात्रा वा सर्वविधापि हिंसा परिवर्जनीया दुःखाज्ञानानन्तफलत्वात्। (द्र० यो० भा० पा० २ सू० ३०, ३४)।

हेयहेतुः—प्रधानपुरुषयोः संयोगो हेयस्य दुःखवहुलसंसारस्य हेतुः। (द्र० यो० भा० पा० २ सू० १५)।

हेयम्—हेयम् दुःखमनागतम्। अतीतस्य दुःखस्य नष्टपूर्वत्वाद् वर्तमानस्य च दुःखस्य भोगेनैव क्षयादनागतदुःखमेव हेयमिति तद्धानार्थमेव यत्नः करणीयः। इति शुभम्।

सारण्यमण्डले पुण्ये ग्रामे विष्णुपुराभिधे।
जनिस्त्रिपाठिनो लब्ध्वा रामादेर्यो विहारिणः॥
न्यायव्याकरणे श्रीमत्सूर्यनारायणाद्गुरोः।
वेदान्तं विश्रुताच्छ्रीमद्धरिहरकृपालुतः॥
श्रुत्वा वादविदग्रणीः स विदितः केदारनाथः कृती,
योगाभीष्टरहस्यमत्र प्रकटीकर्तुं समीहान्वितः।
चन्द्राग्न्यभ्रकलोचनैः परिमिते संवत्सरे वैक्रमे,
ज्येष्ठे मासि सिते च कोशममलं पातञ्जलं संव्यधात्॥

इति श्रीमदाचार्यकेदारनाथत्रिपाठिप्रणीतो योगकोशः पूर्णः।

—०—

वाराणसेयसंस्कृतविश्वविद्यालयोपकुलपतीनां
श्रीमत्करुणापतित्रिपाठिमहानुभावानाम्—

"श्रुतं मे गोपाय"

काशीहिन्दूविश्वविद्यालयीयसंस्कृतमहाविद्यालये दर्शन-विभागाध्यक्षैराचार्यकेदारनाथत्रिपाठिभिः प्रणीतं सांख्ययोग-कोशनामकं पुस्तकं मया सम्यगधीतम्। विशिष्टानां सांख्य-योगदर्शनपारिभाषिकशब्दानां सङ्ग्रहणं प्रमाणनिर्देशपूर्वकं सव्याख्यानमर्थनिबन्धनञ्च कोशेऽस्मिन् त्रिपाठिमहोदयाः कृतवन्तः, यथोभयदर्शनयोर्व्यवहृतानां लोकप्रचलितानां पारिभाषिकशब्दानां कोशक्रमेण संकलनं विद्यते। विश्वसिमि, एतेन कोशग्रन्थेन सांख्ययोगशास्त्राध्येतॄणां जिज्ञासूनां पाठकानां विदुषां विद्यार्थिनाञ्च नूनं भूयान् लाभो भविष्यति। ग्रन्थरत्नस्य चास्य निर्मातारो भूयो भूयो धन्यवादार्हाः। कामयेऽस्याः कृतेरधिकाधिकेन प्रचारेण प्रोत्साहिताः त्रिपाठिमहाभागा अन्यानपि दर्शनग्रन्थान् विरचयिष्यन्तीति।

त्रिपाठिकरुणापतिः
उपकुलपतिः
वाराणसेयसंस्कृतविश्वविद्या-
लयस्य वाराणसीस्थस्य

दिनाङ्के—१५।१२।१९७४